# वैशेषिकदर्शनम् ।

श्रीकणादमुनिप्रणीतम् ।

जालन्धरवैदिकपाठशालामुख्याध्यापकश्रीकृष्णशास्त्रि-
निर्मितटिप्पणीसमलंकृतं प्रशस्तपादाचार्य-
विरचितं तदीयभाष्यम्

श्रीकृष्णशास्त्रिणा संस्कृतम् ।



तदिदम्

मुम्बय्यां

लवपुरीयसंस्कृतपुस्तकालयाध्यक्षेण मिहिरचन्द्रेण निजाऽधिका-
रतो "नेटिव ओपिनियन" यन्त्रालये मुद्रयित्वा
प्रसिद्धिं नीतम् ।

# प्रस्तावना.

दिनकरीग्रन्थपरिशीलनसमये ( स्पष्टं चेदमाकरे ) इति ग्रन्थे दृग्गोचरे सति अस्ति कणादसूत्रोपरि किञ्चिद्भाष्यमिति ज्ञानाङ्कुरो मम हृदि समजनि, पुनश्च ( सू० ४।१।१० ) शङ्करमिश्रकृतवैशेषिकसूत्रोपस्कारे ( प्रशस्तदेवैरतीन्द्रियेषु मध्ये परिगणितमपि ) इत्यादिग्रन्थं पर्यालोचयता प्रशस्तदेव इति भाष्यकर्तुर्नाम स्यादित्यन्वमायि, अनन्तरं चैतदुपलब्धये बहुशः प्रयतमानेनैकदा श्रीरणजितसिंहपूज्यपादश्रीमद्गोस्वामिमधुसूदनपुस्तकालयस्थपुस्तकसूचीपत्रं विदधता इदं प्रशस्तं प्रशस्तदेवभाष्यं समप्रापि।

अस्य निर्माता श्रीमानाचार्यः। विविधाहि सत्याचार्याणां निर्माणप्रणालीति बोधयन्नभिनवरीत्यैव निखिलसूत्ररहस्यं संगृह्य संक्षिप्य मनसि निधाय विनैवाऽक्षरणप्रतीकादिधारणं सूत्रार्थप्रतिपादकं तच्छायारूपमप्यभिनवग्रन्थमिव पदार्थधर्मसंग्रहनामकं भाष्यं निर्मितवान्। कृतवांश्च निजनामग्रन्थनाम च सार्थकम्। यद्यपि प्रतीकादिधारणमन्तरा न ज्ञायते कस्यकस्यसूत्रस्य किंकिंभाष्यमिति तथापि व्याख्येयव्याख्यानुरोधेन विद्वद्भिरूहनीयं। प्रदर्शयिष्यामि च प्रायः पूर्वोऽपरसूत्राणां यथासम्भवं भाष्यसंयोजनमधष्टिप्पण्याम्॥

प्रशस्तपादप्रशस्तदेवइत्येवं भाष्यकर्तुर्नामद्वदर्शनाद्गौतमसूत्रैतद्ग्रन्थपर्यालोचनतश्च संभाव्यते गौतमस्यैव नामान्तरं प्रशस्तपाद इति।

एतत्संस्करणावसरे पुस्तकत्रयमुपलब्धमासीत्

१—पु—श्रीमद्गोस्वामिमधुसूदनपुस्तकालयस्थमतिजीर्णं प्रायः शुद्धं च,

२—पु—श्री......स्थं काश्मीरस्थलिपिलिखितमशुद्धतरञ्च,

३—पु—निश्चलदासपुस्तकालयस्थं प्रायः शुद्धम्.

तत्रात्यन्ताऽशुद्धतरत्वाद्द्वितीयपुस्तकपाठोऽत्र न धृतः। प्रायः प्रथमपुस्तकपाठो मूले धृतस्तृतीयपुस्तकपाठभेदस्त्वधष्टिप्पण्यां प्रदर्शितः संस्कृत्य चेदं मुद्रणायनिजमित्रमिहिरचन्द्रहस्ते समर्पितम्।

श्रीवैद्यराजश्रीमद्दिलेरामसूरिभ्रातृश्रीद्देवकीनन्दनात्मजो जालन्धरवैदिकपाठशालामुख्याध्यापकः

श्रीकृष्णशास्त्री.

श्रीः ।

# वैशेषिकदर्शनम् ।

श्रीगणेशाय नमः ।

अथातो धर्मं व्याख्यास्यामः ॥ १ ॥ यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥ २ ॥ तद्वचनादाम्नायस्य प्रामाण्यम् ॥ ३ ॥ धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निः-श्रेयसम् ॥ ४ ॥ पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥ ५ ॥ रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥ ६ ॥ उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥ ७ ॥ सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ॥ ८ ॥ द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् ॥ ९ ॥ द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ॥ १० ॥ कर्म कर्मसाध्यं न विद्यते ॥ ११ ॥ न द्रव्यं कार्यं कारणं च भवाति ॥ १२ ॥ उभयथा गुणाः ॥ १३ ॥ कार्यविरोधि कर्म ॥ १४ ॥ क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम् ॥ १५ ॥ द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् ॥ १६ ॥ एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् ॥ १७ ॥ द्रव्यगुण-

(१) प्रेतिन.

(२) पदार्थानामिति न.

(३) द्रव्याश्रयोऽगुणवान् संयोगविभागयोर्न कारण पा.

(४) संयोगविभागयोः पा.

कर्मणा द्रव्यं कारणं सामान्यम् ॥ १८ ॥ तथा गुणः ॥ १९ ॥ संयोगविभागवेगानां कर्म समानम् ॥ २० ॥ न द्रव्याणां कर्म ॥ २१ ॥ व्यतिरेकात् ॥ २२ ॥ द्रव्याणां द्रव्यं कार्यं सामान्यम् ॥ २३ ॥ गुणवैधर्म्यान्न कर्मणां कर्म ॥ २४ ॥ द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च ॥ २५ ॥ असमवायात् सामान्यकार्यं कर्म न विद्यते ॥ २६ ॥ संयोगानां द्रव्यम् ॥ २७ ॥ रूपाणां रूपम् ॥ २८ ॥ गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥ २९ ॥ संयोगविभागाश्च कर्मणाम् ॥ ३० ॥ कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् ॥ ३१ ॥

## इति प्रथमाध्यायस्य प्रथममाह्निकम् ॥

कारणाभावात् कार्य्याभावः ॥ १ ॥ न तु कार्य्याभावात् कारणाभावः ॥ २ ॥ सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥ ३ ॥ भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव ॥ ४ ॥ द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च ॥ ५ ॥ अन्यत्रान्त्येभ्यो विशेषेभ्यः ॥ ६ ॥ सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ॥ ७ ॥ द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता ॥ ८ ॥ गुणकर्मसु च भावान्न कर्म न गुण ॥ ९ ॥ सामान्यविशेषाभावेन च ॥ १० ॥ अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ॥ ११ ॥ सामान्यविशेषाभावेन च ॥ १२ ॥ तथा गुणेषु भावाद्गुणत्वमुक्तम् ॥ १३ ॥ सामान्यविशेषाभावेन च ॥ १४ ॥ कर्मसु भावात् कर्मत्वमुक्तम् ॥ १५ ॥ सामान्यविशेषाभावेन च ॥ १६ ॥ सदिति लिङ्गाविशेषाद् विशेषलिङ्गाभावाच्चैको भावः ॥ १७ ॥

## इति प्रथमाध्यायस्य द्वितीयमाह्निकम् ॥

रूपरसगन्धस्पर्शवती पृथिवी ॥ १ ॥ रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ॥ २ ॥ तेजो रूपस्पर्शवत् ॥ ३ ॥ स्पर्शवान् वायुः

---

( १ ) द्रव्य कारणे पा
( २ ) यथा पा

॥ ४ ॥ त आकाशे न विद्यन्ते ॥ ५ ॥ सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ॥ ६ ॥ त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ॥ ७ ॥ विषाणी ककुद्मान् प्रान्ते वालधिः सास्नावान् इति गोत्वे दृष्टं लिङ्गम् ॥ ८ ॥ स्पर्शश्च वायोः ॥ ९ ॥ न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः ॥ १० ॥ अद्रव्यवत्त्वेन द्रव्यम् ॥ ११ ॥ क्रियावत्त्वाद् गुणवत्त्वाच्च ॥ १२ ॥ अद्रव्यत्वेन नित्यत्वमुक्तम् ॥ १३ ॥ वायोर्वायुसंमूर्च्छनं नानात्वे लिङ्गम् ॥ १४ ॥ वायुसन्निकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते ॥ १५ ॥ सामान्यतो दृष्टाच्चाविशेषः ॥ १६ ॥ तस्मादागमिकम् ॥ १७ ॥ संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् ॥ १८ ॥ प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः ॥ १९ ॥ निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ॥ २० ॥ तदलिङ्गमेकद्रव्यत्वात् कर्मणः ॥ २१ ॥ कारणान्तरानुक्लृप्तिवैधर्म्याच्च ॥ २२ ॥ संयोगादभावः कर्मणः ॥ २३ ॥ कारणगुणपूर्वकः कार्यगुणो दृष्टः ॥ २४ ॥ कार्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ॥ २५ ॥ परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ॥ २६ ॥ परिशेषाल्लिङ्गमाकाशस्य ॥ २७ ॥ द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २८ ॥ तत्त्वम्भावेन ॥ २९ ॥ शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च ॥ ३० ॥ तदनुविधानादेकपृथक्त्वं चेति ॥ ३१ ॥

## इति द्वितीयाध्यायस्य प्रथममाह्निकम् ॥

पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम् ॥ १ ॥ व्यवस्थितः पृथिव्यां गन्धः ॥ २ ॥ एतेनोष्णता व्याख्याता ॥ ३ ॥ तेजस उष्णता ॥ ४ ॥ अप्सु शीतता ॥ ५ ॥ अपरस्मिन्नपरं युगपत् चिरं क्षिप्रमिति काललिङ्गानि ॥ ६ ॥ द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ७ ॥ तत्त्वम्भावेन ॥ ८ ॥ नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति ॥ ९ ॥ इत इदमिति

यतस्तद्दिश्य लिङ्गम् ॥ १० ॥ द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ११ ॥ तत्त्वम्भावेन ॥ १२ ॥ कार्यविशेषेण नानात्वम् ॥१३॥ आदित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताच्च प्राची ॥ १४ ॥ तथा दक्षिणा प्रतीची उदीची च ॥ १५ ॥ एतेन दिगन्तरालानि व्याख्यातानि ॥ १६ ॥ सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशय ॥ १७ ॥ दृष्टञ्च दृष्टवत् ॥ १८ ॥ यथादृष्टमयथादृष्टत्वाच्च ॥ १९ ॥ विद्याऽविद्यातश्च संशय. ॥ २० ॥ श्रोत्रग्रहणो योऽर्थ. स शब्द ॥ २१ ॥ तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्य उभयथा दृष्टत्वात् ॥ २२ ॥ एकद्रव्यत्वान्न द्रव्यम् ॥ २३ ॥ नापि कर्माऽचाक्षुषत्वात् ॥ २४ ॥ गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् ॥ २५ ॥ सतो लिङ्गाभावात् ॥ २६ ॥ नित्यवैधर्म्यात् ॥ २७ ॥ अनित्यश्चायं कारणत ॥ २८ ॥ न चासिद्धं विकारात् ॥ २९ ॥ अभिव्यक्तौ दोषात् ॥ ३० ॥ संयोगाद्विभागात् शब्दाच्च शब्दनिष्पत्तिः ॥ ३१ ॥ लिंगाच्चानित्य शब्दः ॥ ३२ ॥ द्वयोस्तु प्रवृत्त्योरभावात् ॥ ३३ ॥ प्रथमाशब्दात् ॥ ३४ ॥ सम्प्रतिपत्तिभावाच्च ॥ ३५ ॥ सन्दिग्धा सति बहुत्वे ॥ ३६ ॥ संख्याभाव सामान्यतः ॥ ३७ ॥

## इति द्वितीयाध्यायस्य द्वितीयमान्हिकम् ॥

प्रसिद्धा इन्द्रियार्थाः ॥ १ ॥ इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ॥ २ ॥ सोऽनपदेश. ॥ ३ ॥ कारणाज्ञानात् ॥ ४ ॥ कार्येषु ज्ञानात् ॥ ५ ॥ अज्ञानाच्च ॥ ६ ॥ अन्यदेव हेतुरित्यनपदेश. ॥ ७ ॥ अर्थान्तरं ह्यर्थान्तरस्याऽनपदेश ॥ ८ ॥ संयोगिसमवाय्येकार्थसमवायिविरोधि च ॥ ९ ॥ कार्यं कार्यान्तरस्य ॥ १० ॥ विरोध्यभूतं भूतस्य ॥ ११ ॥ भूतमभूतस्य ॥ १२ ॥ भूतोभूतस्य ॥ १३ ॥ प्रसिद्धिपूर्वकत्वादपदेशस्य ॥ १४ ॥ अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेश ॥ १५ ॥ यस्मादवि-

षाणी तस्मादश्वः ॥ १६ ॥ यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम् ॥ १७ ॥ आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् ॥ १८ ॥ प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे, परत्र लिङ्गम् ॥ १९ ॥

## इति तृतीयाध्यायस्य प्रथममाह्निकम् ॥

आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥ १ ॥ तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २ ॥ प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ॥ ३ ॥ प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ॥ ४ ॥ तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ५ ॥ यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥ ६ ॥ सामान्यतो दृष्टाच्चाविशेषः ॥ ७ ॥ तस्मादागमिकः ॥ ८ ॥ अहमिति शब्दस्य व्यतिरेकान्नागमिकम् ॥ ९ ॥ यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति ॥ १० ॥ दृष्ट आत्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः ॥ ११ ॥ देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः ॥ १२ ॥ सन्दिग्धस्तूपचारः ॥ १३ ॥ अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः ॥ १४ ॥ देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षोऽहङ्कारः ॥ १५ ॥ सन्दिग्धस्तूपचारः ॥ १६ ॥ न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः ॥ १७ ॥ अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नागमिकः ॥ १८ ॥ सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥ १९ ॥ व्यवस्थातो नाना ॥ २० ॥ शास्त्रसामर्थ्याच्च ॥ २१ ॥

## इति तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥

सदकारणवन्नित्यम् ॥ १ ॥ तस्य कार्यं लिङ्गम् ॥ २ ॥ कारणभावात् कार्यभाव ॥ ३ ॥ अनित्य इति विशेषतः प्रतिषेधभावः

॥ ४ ॥ अविद्या ॥ ५ ॥ महत्यनेकद्रव्यवत्त्वात् रूपाच्चोपलब्धिः ॥ ६ ॥ सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद्वायोरनुपलब्धिः ॥ ७ ॥ अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः ॥ ८ ॥ तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ॥ ९ ॥ तस्याभावादव्यभिचारः ॥ १० ॥ सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायात् चाक्षुषाणि ॥ ११ ॥ अरूपिष्वचाक्षुषाणि ॥ १२ ॥ एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम् ॥ १३ ॥

## इति चतुर्थाध्यायस्य प्रथममाह्निकम् ॥

तत्पुनः पृथिव्यादिकार्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम् ॥ १ ॥ प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते ॥ २ ॥ गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ॥ ३ ॥ अणुसंयोगस्त्वप्रतिषिद्धः ॥ ४ ॥ तत्र शरीरं द्विविधं योनिजमयोनिजञ्च ॥ ५ ॥ अनियतदिग्देशपूर्वकत्वात् ॥ ६ ॥ धर्मविशेषाच्च ॥ ७ ॥ समाख्याभावाच्च ॥ ८ ॥ संज्ञाया आदित्वात् ॥ ९ ॥ सन्त्ययोनिजाः ॥ १० ॥ वेदलिङ्गाच्च ॥ ११ ॥

## इति चतुर्थाध्यायस्य द्वितीयमाह्निकम् ॥

आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥ १ ॥ तथा हस्तसंयोगाच्च मुसले कर्म ॥ २ ॥ अभिघातजे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥ ३ ॥ तथात्मसंयोगो हस्तकर्मणि ॥ ४ ॥ अभिघातान्मुसलसंयोगाद्धस्ते कर्म ॥ ५ ॥ आत्मकर्म हस्तसंयोगाच्च ॥ ६ ॥ संयोगाभावे गुरुत्वात् पतनम् ॥ ७ ॥ नोदनविशेषाभावान्नोर्ध्वं न तिर्यग्गमनम् ॥ ८ ॥ प्रयत्नविशेषान्नोदनविशेषः ॥ ९ ॥ नोदनविशेषादुदसनविशेषः ॥ १० ॥ हस्तकर्मणा दारककर्म व्याख्यातम् ॥ ११ ॥ तथा दग्धस्य विस्फोटने ॥ १२ ॥ यत्नाभावे प्रसुप्तस्य चलनम् ॥ १३ ॥ तृणे कर्म वायुसंयोगात् ॥ १४ ॥ मणि-

गमनं सूच्यभिसर्पणमदृष्टकारणम् ॥ १५ ॥ इषावयुगपत् संयोगविशेषः कर्मान्यत्वे हेतुः ॥ १६ ॥ नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ॥ १७ ॥ संस्काराभावे गुरुत्वात् पतनम् ॥ १८ ॥

## इति पञ्चमाध्यायस्य प्रथममाह्निकम् ॥

नोदनाभिघातात् संयोगाच्च पृथिव्या कर्म ॥ १ ॥ तद्विशेषेणादृष्टकारितम् ॥ २ ॥ अपां संयोगाभावे गुरुत्वात् पतनम् ॥ ३ ॥ द्रवत्वात् स्यन्दनम् ॥ ४ ॥ नाड्यो वायुसंयोगादारोहणम् ॥ ५ ॥ नोदनापीडनात् संयुक्तसंयोगाच्च ॥ ६ ॥ वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥ ७ ॥ अपां यातो विलयनं च तेजः संयोगात् ॥ ८ ॥ तत्र विस्फूर्जथुर्लिङ्गम् ॥ ९ ॥ वैदिकं च ॥ १० ॥ अपां संयोगाद्विभागाच्च स्तनयित्नोः ॥ ११ ॥ पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् ॥ १२ ॥ अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम् ॥ १३ ॥ हस्तकर्मणा मनसः कर्म व्याख्यातम् ॥ १४ ॥ आत्मेन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे ॥ १५ ॥ तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः संयोगः ॥ १६ ॥ अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चेत्यदृष्टकारितानि ॥ १७ ॥ तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्ष ॥ १८ ॥ द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः ॥ १९ ॥ तेजसो द्रव्यान्तरेणावरणाच्च ॥ २० ॥ दिक्कालावाकाशं च क्रियावद्वैधर्म्यान्निष्क्रियाणि ॥ २१ ॥ एतेन कर्माणि गुणाश्च व्याख्याताः ॥ २२ ॥ निष्क्रियाणां समवायः कर्मभ्यो निषिद्ध ॥ २३ ॥ कारणं त्वसमवायिनो गुणाः ॥ २४ ॥ गुणैर्दिग् व्याख्याता ॥ २५ ॥ कारणेन कालः ॥ २६ ॥

## इति पञ्चमाध्यायस्य द्वितीयमाह्निकम् ॥

बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥ १ ॥ ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम्

॥ २ ॥ बुद्धिपूर्वो ददातिः ॥ ३ ॥ तथा प्रतिग्रहः ॥ ४ ॥ आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् ॥ ५ ॥ तद्दुष्टभोजने न विद्यते ॥ ६ ॥ दुष्टं हिंसायाम् ॥ ७ ॥ तस्य समभिव्याहारतो दोषः ॥ ८ ॥ तददुष्टे न विद्यते ॥ ९ ॥ पुनर्विशिष्टे प्रवृत्तिः ॥ १० ॥ समे हीने वा प्रवृत्तिः ॥ ११ ॥ एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् ॥ १२ ॥ तथा विरुद्धानां त्यागः ॥ १३ ॥ हीने परे त्यागः ॥ १४ ॥ समे आत्मत्यागः परत्यागो वा ॥ १५ ॥ विशिष्टे आत्मत्याग इति ॥ १६ ॥

## इति षष्ठाध्यायस्य प्रथममाह्निकम् ॥

दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥ १ ॥ अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥ २ ॥ चातुराश्रम्यमुपधा अनुपधाश्च ॥ ३ ॥ भावदोष उपधाऽदोषोऽनुपधा ॥ ४ ॥ यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचि ॥ ५ ॥ अशुचीति शुचिप्रतिषेधः ॥ ६ ॥ अर्थान्तरं च ॥ ७ ॥ अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावाद् विद्यते वाऽर्थान्तरत्वाद् यमस्य ॥ ८ ॥ असति चाभावात् ॥ ९ ॥ सुखाद्रागः ॥ १० ॥ तन्मयत्वाच्च ॥ ११ ॥ अदृष्टाच्च ॥ १२ ॥ जातिविशेषाच्च ॥ १३ ॥ इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः ॥ १४ ॥ तत्संयोगो विभागः ॥ १५ ॥ आत्मकर्मसु मोक्षो व्याख्यातः ॥ १६ ॥

## इति षष्ठाध्यायस्य द्वितीयमाह्निकम् ॥

उक्ता गुणाः ॥ १ ॥ पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च ॥ २ ॥ एतेन नित्येषु नित्यत्वमुक्तम् ॥ ३ ॥ अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् ॥ ४ ॥ अनित्येष्वनित्या द्रव्यानित्यत्वात् ॥ ५ ॥ कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥ ६ ॥ एकद्रव्यत्वात् ॥ ७ ॥ अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥ ८ ॥ कारणबहुत्वाच्च ॥ ९ ॥ अतो विपरीतमणु ॥ १० ॥

अणु महदिति तस्मिन् विशेषभावात् विशेषाभावाच्च ॥ ११ ॥ एककालत्वात् ॥ १२ ॥ दृष्टान्ताच्च ॥ १३ ॥ अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥ १४ ॥ कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः ॥१५॥ अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ॥ १६ ॥ एतेन दीर्घत्वह्रस्वत्वे व्याख्याते ॥ १७ ॥ अनित्येऽनित्यम् ॥ १८ ॥ नित्ये नित्यम् ॥ १९ ॥ नित्यं परिमण्डलम् ॥ २० ॥ अविद्या च विद्यालिङ्गम् ॥ २१ ॥ विभवान्महानाकाशस्तथा चात्मा ॥ २२ ॥ तदभावादणुमनः ॥ २३ ॥ गुणैर्दिग् व्याख्याता ॥२४॥ कारणे कालः ॥ २५ ॥

इति सप्तमाध्यायस्य प्रथममाह्निकम् ॥

रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥ १ ॥ तथा पृथक्त्वम् ॥ २ ॥ एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ३ ॥ निःसंख्यत्वात् कर्मगुणानां सर्वैकत्वं न विद्यते ॥ ४ ॥ भ्रान्तं तत् ॥ ५ ॥ एकत्वाभावाद्भक्तिस्तु न विद्यते ॥ ६ ॥ कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते ॥ ७ ॥ एतदनित्ययोर्व्याख्यातम् ॥ ८ ॥ अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः ॥९॥ एतेन विभागो व्याख्यातः ॥१०॥ संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ११ ॥ कर्मभिः कर्माणि गुणैर्गुणा अणुत्वमहत्त्वाभ्यामिति ॥१२॥ युतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते ॥ १३ ॥ गुणत्वात् ॥ १४ ॥ गुणोऽपि विभाव्यते ॥ १५ ॥ निष्क्रियत्वात् ॥ १६ ॥ असति नास्तीति च प्रयोगात् ॥ १७ ॥ शब्दार्थावसम्बन्धौ ॥ १८ ॥ संयोगिनो दण्डात् समवायिनो विशेषाच्च ॥ १९ ॥ सामयिकः शब्दादर्थप्रत्ययः ॥ २० ॥ एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरञ्च ॥ २१ ॥ कारणपरत्वात् कारणापरत्वाच्च ॥ २२ ॥ परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वा-

भ्यां व्याख्यातः ॥ २३ ॥ कर्मभिः कर्माणि ॥ २४ ॥ गुणैर्गुणाः ॥ २५ ॥ इहेदमिति यतः कार्यकारणयोः स समवायः ॥ २६ ॥ द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः ॥ २७ ॥ तत्त्वम्भावेन ॥

## इति सप्तमाध्यायस्य द्वितीयमाह्निकम् ॥

द्रव्येषु ज्ञानं व्याख्यातम् ॥ १ ॥ तत्रात्मा मनश्चाप्रत्यक्षे ॥ २ ॥ ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ॥ ३ ॥ गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् ॥ ४ ॥ सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानम् ॥ ५ ॥ सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥ ६ ॥ द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥ ७ ॥ गुणकर्मसु गुणकर्माभावाद्गुणकर्मापेक्षं न विद्यते ॥ ८ ॥ समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते एते कार्यकारणभूते ॥ ९ ॥ द्रव्येष्वनितरेतरकारणाः ॥ १० ॥ कारणायौगपद्यात् कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ॥ ११ ॥

## इत्यष्टमाध्यायस्य प्रथममाह्निकम् ॥

अयमेष त्वया कृतं भोजयैनमिति बुद्ध्यपेक्षम् ॥ १ ॥ दृष्टेषु भावाददृष्टेष्वभावात् ॥ २ ॥ अर्थ इति द्रव्यगुणकर्मसु ॥ ३ ॥ द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम् ॥ ४ ॥ भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ॥ ५ ॥ तथापस्तेजो वायुश्च रसरूपस्पर्शाविशेषात् ॥ ६ ॥

## इत्यष्टमाध्यायस्य द्वितीयमाह्निकम् ॥

क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ १ ॥ सदसत् ॥ २ ॥ असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३ ॥ सच्चासत् ॥ ४ ॥ यच्चान्यदसदतस्तदसत् ॥ ५ ॥ असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेर्विरोधिप्रत्यक्षवत् ॥ ६ ॥ तथाऽभावे भावप्रत्यक्षत्वाच्च ॥ ७ ॥ एतेनाघटोऽगौरधर्मश्च व्याख्यातः ॥ ८ ॥ अभूतं नास्तीत्यनर्थान्तरम् ॥ ९ ॥ नास्तिघटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः ॥ १० ॥ आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम् ॥ ११ ॥ तथा द-

द्रव्यान्तरेषु प्रत्यक्षम् ॥ १२ ॥ असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषां च ॥ १३ ॥ तत्समवायात् कर्मगुणेषु ॥ १४ ॥ आत्मसमवायादात्मगुणेषु ॥ १५ ॥

## इति नवमाध्यायस्य प्रथममाह्निकम् ॥

अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥ १ ॥ अस्येदं कार्यकारणसम्बन्धश्चावयवाद्भवति ॥ २ ॥ एतेन शाब्दं व्याख्यातम् ॥ ३ ॥ हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ॥ ४ ॥ अस्येदमिति बुद्ध्यपेक्षितत्वात् ॥ ५ ॥ आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः ॥ ६ ॥ तथा स्वप्नः ॥ ७ ॥ स्वप्नान्तिकम् ॥ ८ ॥ धर्माच्च ॥ ९ ॥ इन्द्रियदोषात् संस्कारदोषाच्चाविद्या ॥ १० ॥ तद्दुष्टज्ञानम् ॥ ११ ॥ अदुष्टं विद्या ॥ १२ ॥ आर्षं सिद्धदर्शनं च धर्मेभ्यः ॥ १३ ॥

## इति नवमाध्यायस्य द्वितीयमाह्निकम् ॥

इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः ॥ १ ॥ संशयनिर्णयान्तराभावाच्च ज्ञानान्तरत्वे हेतुः ॥ २ ॥ तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् ॥ ३ ॥ अभूदित्यपि ॥ ४ ॥ सति च कार्यादर्शनात् ॥ ५ ॥ एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ॥ ६ ॥ एकदेशे इत्येकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः ॥ ७ ॥

## इति दशमाध्यायस्य प्रथममाह्निकम् ॥

कारणमिति द्रव्ये कार्यसमवायात् ॥ १ ॥ संयोगाद्वा ॥ २ ॥ कारणे समवायात् कर्माणि ॥ ३ ॥ तथा रूपे कारणैकार्थसमवायाच्च ॥ ४ ॥ कारणसमवायात् संयोगः पटस्य ॥ ५ ॥ कारणकारणसमवायाच्च ॥ ६ ॥ संयुक्तसमवायादग्नेर्वैशेषिकम् ॥ ७ ॥ दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ॥ ८ ॥ तद्वचनादाम्नायस्य प्रामाण्यमिति ॥ ९ ॥ इति ॥

## ॥ ॐम् ॥

श्रीगणेशाय नमः ॥ प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः । पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदयः ॥ १ ॥ द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुः ॥ तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेवं ॥ अथ के द्रव्यादयः पदार्थाः किञ्च तेषां साधर्म्यं वैधर्म्यं चेति ॥ तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि सामान्यविशेषसंज्ञयोक्तानि नवैव तद्व्यतिरेकेण संज्ञान्तरानभिधानात् ॥

गुणा रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्च कण्ठोक्ताः सप्तदश । च शब्द

---

१ हेतु जगत्कारणमेतेनेश्वरसद्भावे प्रमाण दर्शितम्.

२ अतः ईश्वरप्रणामादनु पश्चान्मुनिं प्रणम्य यद्वा अतः शिष्यजिज्ञासातः यतोहि शुश्रूषव. शिष्या उपसेदुस्ततो वक्ष्यत इत्यन्वयः अथवा अत इति ल्यब्लोपे पञ्चमी, शास्त्रं बुद्धिस्थं सूत्रग्रन्थं समाहृत्येत्यर्थः.

३ पदार्था द्रव्यादयस्तेषा धर्माः साधर्म्यवैधर्म्यरूपा अनेन संगृह्यन्ते शास्त्रे नानास्थानेषु वितता एकत्र संकलय्य कथ्यन्त इति संग्रहः.

४ उदय ऐश्वर्यमुद्बोधो ज्ञान तद्धेतुकं नि श्रेयस च.

५ भावपदार्था एव प्राधान्येनोद्दिष्टा वेदितव्या अभावस्तु स्वरूपवानपि पृथग्

[illegible]

पावर्जितस्येश्वरस्य नोदना प्रेरणा, अभिव्यक्त तेनाभिव्यक्ता सम्प्रदिताभिवृत्तिलक्षणात्मुरस्ताविशेषाद्धर्मात्

८ किञ्चेति चकार. प्रश्नसमुच्चये, वैधर्म्यं चेति चकारो वैधर्म्यसमुच्चये.

९ सामान्यसंज्ञा द्रव्यमित्यादिका, विशेषसंज्ञा पृथिवीत्यादिका.

१० सूत्रकारेणेति शेष, लोकेऽन्यत्रापि ज्ञेयम्.

११ कण्ठोक्ताः सूत्रकारेणासाधारणशब्देनोद्दिष्टाः.

समुच्चितास्तु गुरुत्वद्रवत्वस्नेहसंस्काराऽदृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिर्गुणाः ॥ उत्क्षेपणाऽवक्षेपणाऽऽकुञ्चनप्रसारणगमनानि पञ्चैव कर्माणि गमनग्रहणाद्भ्रमणरेचनस्पन्दनोर्ध्वज्वलनतिर्यक्पतननमनोन्नमनादयो गमनविशेषा एव न तु जात्यन्तराणि ॥

सामान्यं द्विविधं परमपरञ्चेति । तच्चानुवृत्तिप्रत्ययकारणम् । तत्र परं सत्ता महाविषयत्वात् । सा चानुवृत्तेरेव हेतुत्वात्सामान्यमेव । द्रव्यत्वाद्यपरमल्पविषयत्वात् । तच्च व्यावृत्तेरपि हेतुत्वात्सामान्यं सद्विशेषाख्यामपि लभते ॥ नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । ते च खल्वत्यन्तव्यावृत्तबुद्धिहेतुत्वाद्विशेषा एव ॥ अयुतसिद्धानामाधार्याधारभूतानां यः संबन्ध इहेति प्रत्ययहेतुः स समवायः । एवं धर्मैर्विना धर्मिणामुद्देशः कृतः ॥ षण्णामपि पदार्थानां साधर्म्यमस्तित्वाऽभिधेयत्वज्ञेयत्वानि । आश्रितत्वं चाऽन्यत्र नित्यद्रव्येभ्यः ॥ द्रव्यादीनां पञ्चानामपि समवायित्वमनेकत्वं च । गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे ॥ द्रव्यादीनां त्रयाणामपि सत्तासम्बन्धः सामान्यविशेषवत्त्वं-स्वसमवायार्थशब्दाभिधेयत्वं धर्माधर्मकर्तृत्वं च ॥

---

१ चशब्दसमुच्चिता साक्षात्सूत्रितत्वेऽप्यभ्युपगमसिद्धान्तन्यायेन सिद्धगुणभावाश्च शब्देन समुच्चीयाऽस्वशब्देन विभागसूत्रे सगृहीता । एवं च विभागसूत्रे न्यूनता दोषोऽपि न.

२ इत्येव कण्ठोक्त्या समुच्चयेन चेकतया

३ नमनोन्नमनादय । पा २ पु

४ अनुगतप्रतीतिकारणम्

५, अन्योन्यपरिहारेण पृथगाश्रयानाश्रितानाम्

६ इह तन्तुषु पट इत्यादि.

७ स्वसमवायोऽर्थशब्दाभिधेयत्व च पा २ पु । त सू अर्थ इति द्रव्यगुणकर्मसु ।८।२।३।

८ विहितनिषिद्धभावनाविरहतया द्रव्यादीनां तद्धेतुत्व न स्वरूपत. । सामान्यादिषु स्वरूपतो द्रव्यादिषु मनन्तर्भावात् भावनावेशो न सम्भवति । नित्यत्वेना व्यापारत्वात् । अनित्यधर्मयोगेना व्यापारित्वात् । स्वाश्रयावच्छेदमात्रेणैवोपयुज्यन्ते इति न तेषां तद्धेतुत्वम्.

कार्यत्वानित्यत्वे कारणवतामेव । कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः द्रव्यादीनां त्रयाणां कारणत्वं द्रव्याश्रितत्वं चान्यत्र नित्यद्रव्येभ्यः । सामान्यादीनां त्रयाणां स्वात्मसत्त्वं बुद्धिलक्षणत्वमकार्यत्वमकारणत्वमसामान्यविशेषवत्त्वं नित्यत्वमर्थशब्दानभिधेयत्वं च ॥ पृथिव्यादीनां नवानामपि द्रव्यत्वयोगः स्वात्मन्यारम्भकत्वं गुणवत्त्वं कार्यकारणाविरोधित्वमन्त्यविशेषवत्त्वम् ॥

अनाश्रितत्वनित्यत्वे चान्यत्रावयविद्रव्येभ्यः ॥ पृथिव्युदकज्वलनपवनात्ममनसामनेकत्वापरजातिमत्त्वे ॥ क्षितिजलज्योतिरनिलमनसां क्रियावत्त्वमूर्तत्वपरत्वापरत्ववेगवत्त्वानि ॥ आकाशकालदिगात्मनां सर्वगतत्वं परममहत्त्वं सर्वसंयोगिसमानदेशत्वं चेति ॥ पृथिव्यादीनां पंचानामपि भूतत्वेन्द्रियप्रकृतित्वबाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वानि ॥ चतुर्णां द्रव्यारम्भकत्वस्पर्शवत्त्वे ॥ त्रयाणां प्रत्यक्षत्वरूपवत्त्वानि ॥ द्वयोर्गुरुत्वं रसवत्त्वं च ॥ भूतात्मनां वैशेषिकगुणवत्त्वम् ॥ क्षित्युदकात्मनां चतुर्दशगुणवत्त्वम् ॥ आकाशात्मनां क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वम् ॥ दिक्कालयोः पंचगुणवत्त्वं ॥ सर्वोत्पत्तिमतां निमित्तकारणत्वं च ॥ क्षितितेजसोर्नैमित्तिकद्रवत्वयोग ॥ एवं सर्वत्र साधर्म्यं विपर्ययाद्वैधर्म्यं वाच्यमिति ॥ इहेदानीमेकैकशो

---

१ कारणत्वं च ज्ञातृधर्मेतरकारणापेक्षया परिमण्डलमेव पारिपारिमाण्डल्य पारिमण्डल परमाणुपरिमाणम्. आदिना परममहत्त्वादय.

२ स्वात्मनैव सत्त्वं न तु द्रव्यादिवत्सत्ताश्रयत्वेन । सत्ताविरह इति यावत्.

३ अनुगतादिबुद्धिरेव हि सामान्यादित्रये प्रमाण लक्षणम्.

४ कार्यकारणयोरन्यतरेणापि द्रव्यमजातीय न विरुध्यते.

५ इन्द्रियप्रकृतित्वमिन्द्रियोपादानत्वं तच्चाकाशानित्यत्वेऽप्यवच्छिन्नानवच्छिन्नभेदकल्पनयोपपादनीयम् । प्रकृतिशब्द. स्वभावार्थो वा । मनोव्यवच्छेदाय तु सन्निहित बाह्यपदमनुसन्धेयम्.

६ चान्य स्वयमूहित्वा गुरुणा वाच्य शिष्यैर्भाव्यमिति साधर्म्यं वैधर्म्यं च विपर्ययात् । पा २ प तदायमर्थ । एवमनेन न्यायेन सर्वत्र साधर्म्य यत्तदेव विपर्ययाद्व्यावृत्तेर्वैधर्म्यं यद्वैधर्म्यं तदेव विपर्ययादनुवृत्ते साधर्म्यं वाच्य गुरुणेत्यादि —

वैधर्म्यमुच्यते ॥ पृथिवीत्वाभिसम्बन्धात्पृथिवी । रूपरसगन्धस्पर्शस-ङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्कारवती । एते च गुणनिवेशाधिकारे रूपादयो गुणविशेषाः सिद्धाः । चाक्षुषवचनात् सप्तसङ्ख्यादयः । पतनोपदेशाद् गुरुत्वम् । अद्भिः सामान्यवचनाद्द्रवत्वम् । उत्तरकर्मवचनात्संस्कारः । क्षितावेव गन्धः । रूपमनेकप्रकारं शुक्लादि । रसश्च षड्विधो मधुरादिः । गन्धो द्वि-विधः सुरभिरसुरभिश्च । स्पर्शोऽस्या अनुष्णाऽशीतत्वे सति पाकजः । सा तु द्विविधा नित्याऽनित्या च । परमाणुलक्षणा नित्या । कार्यल-क्षणा त्वनित्या ॥ सा च स्थैर्याद्यवयवसन्निवेशविशिष्टा । अपरजाति-बहुत्वोपेता शयनासनाद्यनेकोपकारकरी च । त्रिविधं चास्याः कार्यं शरीरेन्द्रियविषयसंज्ञकम् । तत्र शरीरं द्विविधं योनिजमयोनिजं च । तत्रायोनिजमनपेक्षितशुक्रशोणितं देवर्षीणां शरीरं धर्मविशेषसहिते-भ्योऽणुभ्यो जायते ॥

---

१ इत्यनन्तरेण इदानीमवसरप्राप्तो एकैकशः एकैकस्मिन्नेव वैधर्म्यमितरापेक्षयेति बोध्यम्.

२ गुणानां निवेशो द्रव्यादिषु समवायः स प्रतिपाद्यत्वेनाधिक्रियतेऽस्मिन्निति.

गु-रः द्वितीयोऽध्यायस्तत्र । २ पु. विनिवेश इति पा.

३ सिद्धाः सूत्रकारवचनात्. तथा च. सू. रूपरसगन्धस्पर्शवती पृथिवी ।२।१।१।

४ धर्मं च रूपिद्रव्यसमवायाच्चाक्षुषाणि ।४।१।११। इति सूत्रे सङ्ख्यादीनां चाक्षु-षत्वे हेतुत्वेन रूपिद्रव्यसमवाय उक्तः । न चाऽसिद्धस्य हेतुत्वमतस्तेपि रूपवत्यां पृ-थिव्यां सप्त सिद्धा अधिकरणन्यायतः.

५ संयोगाभावे गुरुत्वात्पतनम् ।५।१।७। इति सूत्रे पतने गुरुत्वस्य हेतोरुपदेशा-त्तद्वत्यां पृथिव्यां गुरुत्वमपि सिद्धं यतो नासिद्धस्य हेतुत्वम्.

६ सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ।२।१।६। सूत्रे.

७ नोदनादाद्यमिषोः कर्म, तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ।५।१।१७। इति सूत्रे पार्थिवे इषौ उत्तरकर्मणि संस्कारकारणत्वेन कथनात्सोऽपि द्वि तत्र सिद्धः.

८ गुणवत्त्वेन द्रव्यत्वे व्यवस्थिते पृथिवीत्वव्यवस्थापकान्गुणविशेषान्दर्शयति क्षि-तावेति । एवं वार्यत्वपि ज्ञेयम्.

क्षुद्रजन्तूनां यातनाशरीराण्यधर्मविशेषसहितेभ्योऽणुभ्यो जायन्ते। शुक्रशोणितसन्निपातजं योनिजम्। तच्च द्विविधम्। जरायुजमण्डजं च। मानुषपशुमृगाणां जरायुजम्। पक्षिसरीसृपाणामण्डजम्। इन्द्रियं गन्धव्यञ्जकं सर्वप्राणिनां जलाद्यनभिभूतैः पार्थिवावयवैरारब्धं घ्राणम्। विषयस्तु द्व्यणुकादिप्रक्रमेणारब्धस्त्रिविधो मृत्पाषाणस्थावरलक्षणः। तत्र भूप्रदेशाः प्राकारेष्टकादयो मृद्विकाराः। पाषाणा उपलमणिवज्रादयः। स्थावरास्तृणगुल्मौषधितरुलतावितानवनस्पतय इति॥

अप्त्वाभिसम्बन्धादापो रूपरसस्पर्शद्रवत्वस्नेहसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वगुरुत्वसंस्कारवत्यः। एते च पूर्ववत्सिद्धाः। शुक्लमधुरशीता एव रूपरसस्पर्शाः। स्नेहोऽम्भस्येव, सांसिद्धिकत्वं च द्रवत्वम्। तास्तु पूर्ववद्द्विविधाः नित्याऽनित्यभावात्। कार्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम्। तत्र शरीरमयोनिजमेव वरुणलोके प्रसिद्धम्। पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम्। इन्द्रियं रसव्यञ्जकं सर्वप्राणिनां विजातीयावयवैरनभिभूतैर्जलावयवैरारब्धं रसनम्। विषयस्तु सरित्समुद्रहिमकरकादिः॥

---

१ यातना पीडा.

२ गन्धज्ञानजनकम्.

३ गुल्मा एकमूलाः शरेक्षुप्रभृतयः.

४ लता वल्ली.

५ एते रूपादयः पृथिव्यामिवाऽप्स्वपि वचनादिना सिद्धा एवमग्रेऽपि योजनीयम्.

६ उपष्टम्भ एतेन शरीराणामेकैकभूतप्रकृतिकत्वं दर्शितम्। न पञ्चात्मकत्वमप्रत्यक्षत्वात्तेनापि त्र्यात्मकत्वं गुणान्तरानुपपत्तेः विजातीयाऽवयवसंयोगस्य द्रव्यानारम्भकत्वादपि न नानाप्रकृतिकत्वम्। उपष्टम्भकतया तु विजातीयावयवसंयोग इष्ट एव, तथा च नेतरेतरगुणप्रतीतिस्तेनतानि चोपभोगासमर्थानि जलीयादिशरीराणि.

७ रसोपलम्भकम्, पा. २ पु.

८ अन्यवयवा पा. २ पु.

९ अनभिभूतैरमन्दीकृतैः.

१० करकादिरिति, पा. २ पु.

तेजस्त्वाभिसम्बन्धात्तेजोरूपस्पर्श संख्यापरिमाणपृथक्त्वसंयोगवि-
नागपरत्वाऽपरत्वद्रवत्वसंस्कारवत्पूर्ववदेषां सिद्धिः । शुक्लभास्वरं च
रूपम् । उष्ण एव स्पर्शः । नैमित्तिकं च द्रवत्वम् । तदपि द्विविधम-
णुकार्यभावात् । कार्यं च शरीरादित्रयम् । शरीरमयोनिजमेवादित्य-
लोके पार्थिवाऽवयवोपष्टम्भाच्चोपभोगसमर्थम् । इन्द्रियं रूपव्यञ्जकं
सर्वप्राणिनामन्योऽवयवाऽनभिभूतैस्तेजोऽवयवैरारब्धं चक्षुः । विषय-
संज्ञकं चतुर्विधम् । भौमं दिव्यमुदर्यमाकरजं च तत्र भौमं काष्ठेन्ध-
नप्रभवमूर्ध्वज्वलनस्वभावं पचनस्वेदनादिसमर्थम् । दिव्यमनिन्धनं
सौरविद्युदादि । भुक्तस्याहारस्य रसादिपरिणामसमर्थमुदर्यं निरिन्ध-
नम् । आकरजं च सुवर्णादि । तत्र संयुक्तसमवायाद्रसाद्युपलब्धिरिति॥

वायुत्वाभिसम्बन्धाद्वायुः स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभाग-
परत्वाऽपरत्वसंस्कारवान् । स्पर्शोऽस्यानुष्णाशीतत्वे सत्यपाकजः गु-
णनिवेशाधिकारसिद्धः । अरूपिष्वचाक्षुषवचनात्सप्तसंख्यादयः । तु-
णे कर्मवचनात्संस्कारः । स चायं द्विविधोऽणुकार्यभावात् । तत्र का-
र्यलक्षणश्चतुर्विधः । शरीरमिन्द्रियं विषयः प्राण इति । तत्रायोनि-
जमेव शरीरं मरुतां लोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् ।
न्द्रियं सर्वप्राणिनां स्पर्शोपलम्भकं पृथिव्याद्यनभिभूतैर्वाय्ववयवैरा-
ब्धं सर्वशरीरव्यापि त्वक् । विषयस्तूपलभ्यमानस्पर्शाधिष्ठानभूतः
स्पर्शशब्दधृतिकम्पलिङ्गस्तिर्यग्गमनस्वभावको मेघादिप्रेरणधारणादि-

१ पृथिव्यादिवत्.
२ सर्वप्राणिनां रूपव्यञ्जकम्. पा. २ पु.
३ निरिन्धनमिति. त. १ पु.
४ चेति न २ पु.
५ तत्र सुवर्णादौ स्वसमयुक्तपृथिव्यादिसमवायाद्रसादिप्रतीतिः । आदिना पीतिम-
गुरुत्वयोः संग्रहः.
६ सिद्धिः सूत्रकारवचनात् तथा च सू. वायुः स्पर्शवान् ।२।१।४। इति सूत्रेण कथनात्, सिद्धा इति अनुवृत्तम्.
७ अरूपिष्वचाक्षुषाणि ।४।१।२। इति सूत्रेण कथनात्,
८ तृणे कर्म वायुसंयोगात् ।५।१।४। इति सूत्रेण.

समर्थः । तस्याऽप्रत्यक्षस्यापि नानात्वं संमूर्च्छनेनानुमीयते । संमूर्च्छनं पुनः समानजात्योर्वाय्वोर्विरुद्धदिक्क्रिययोः संनिपातः । सोऽपि तृणादिगमनेनानुमितेन सावयविनोर्ध्वगमनेनानुमीयते । प्राणोऽन्तःशरीरे रसमलधातूनां प्रेरणादिहेतुः एकः सन् क्रियाभेदादपानादिसंज्ञां लभत इति ॥

चतुर्णां महाभूतानां सृष्टिसंहारविधिरुच्यते । ब्राह्मेण मानेन वर्षशतान्ते वर्तमानस्य ब्रह्मणोऽपवर्गकाले संसारे खिन्नानां प्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य संजिहीर्षासमकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतादृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागास्तेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः । तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाशः । ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते । धर्माधर्मसंस्कारानुविद्धा आत्मानस्तावन्तमेव कालम् । ततः पुनः प्राणिनां भोगभूतये महेश्वरस्य सिसृक्षानन्तरं सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादिक्रमेण महान् वायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव वायावाप्येभ्यः परमाणुभ्यस्तेनैव क्र-

---

१ समानजवयोः पा २ पु जवो वेगः

२ सावयविनोर्वाय्वोः

३ अयमाशयः । वाय्वोः संमूर्च्छनेन तयोरूर्ध्वगमनं भवति । नदीप्रवाहस्य पयसोरिव । तेन च तृणादीनामूर्ध्वगमनं, एवं च प्रत्यक्षेणानेनाप्रत्यक्षस्यापि वाय्वोरूर्ध्वगमनस्यानुमानं तेनानुमानासिद्धेनाप्रत्यक्षं समूर्च्छनस्य, तेन च वायोर्नानात्वं सिद्धमन्यथा वायोरेकत्वे समूर्च्छनानुपपत्त्या तयोरूर्ध्वगमनानुपपत्तेस्तृणाद्यूर्ध्वगमनस्यापि प्रत्यक्षसिद्धस्यानुपपत्तिः स्यात् नानात्वे सू वायोर्वायुसमूर्च्छनं नानात्वलिङ्गम् २।१।१४।

४ वृत्तिनिरोधे व्यापारोपरमे नत्वत्यन्तसमुच्छेदे । तथात्वे, प्रलयानन्तरं पुनः शरीरादिसम्बन्धानुपपत्तेरत्यन्तोच्छिन्नदृष्टैर्मुक्तात्मभिः संसार्यात्मनामभेदापत्तेश्च

पेण महान्सलिलनिधिरुत्पन्नः। पोप्लूयमानस्तिष्ठति। तदनन्तरं तस्मिन्नेव पार्थिवेभ्यः परमाणुभ्यो द्व्यणुकादिक्रमेण समुत्पन्ना महापृथिवी संहताऽवतिष्ठते। तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्यः परमाणुभ्यो द्व्यणुकादिक्रमेणोत्पन्नो महांस्तेजोराशिर्देदीप्यमानस्तिष्ठति। एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महेश्वरस्याभिध्यानमात्रात्तैजसेभ्योऽणुभ्यः पार्थिवाणुसहितेभ्यो महदण्डमारभ्यते। तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे नियुङ्क्ते। स च महेश्वरेण नियुक्तो ब्रह्माऽतिशयज्ञानवैराग्यैश्वर्यसम्पन्नः सर्वप्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञानभोगायुषः सुतान्प्रजापतीन् मानसान् मनून् देवर्षिपितृगणान् मुखबाहूरुपादतश्चतुरो वर्णानन्यानि चोच्चावचानि भूतानि सृष्ट्वा आशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयतीति॥

आकाशकालदिशामेकैकत्वादपरजात्यभावे पारिभाषिक्यस्तिस्रः संज्ञा भवन्ति आकाशं कालो दिगिति। तत्राकाशस्य गुणाः शब्दसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाः। शब्दः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादयावद्द्रव्यभावित्वादाश्रयादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुणः। बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वादात्मन्यसमवायाद-

---

१ संहता घनीभूता.

२ अभिध्यानमात्रात्, एवमग्रे, इच्छामात्रान्न तु व्यापारान्तरात्

३ परमाणुभ्यः पा. २ पु.

४ उत्पाद्य अभिध्यानमात्रादित्यनुषज्यते, एवं नियुङ्क्ते इत्यत्रापि

५ एषा ह्यादिसृष्टिरयोनिजैव तत्राधर्मविशेषसहकृतेभ्योऽणुभ्योऽवचा चाऽधर्मविशेषसहकृतेभ्यो जायते ब्रह्माऽयोनिजोऽतिशयितधर्मविशेषसहकृतेभ्योऽणुभ्यो जायते—ईश्वराभिध्यानमात्रात्.

६ आशया वासना यतो हि कर्माणि तत्र शेरते फलदानाय

७ तान्त्रिकस्य.

८ अयावद्द्रव्यभावित्वमाश्रयत्वाभिमतकालीनध्वंसप्रतियोगित्वम्

९ अन्यत्र श्रोत्रदेशे.

हङ्कारेण विभक्तग्रहणाच्च नात्मगुणः । श्रोत्रग्राह्यत्वाद्वैशेषिकगुणभावाच्च न दिक्कालमनसाम् । (पारिशेष्याद्गुणो भूत्वाकाशस्याधिगमे लिङ्गम् । शब्दलिङ्गाविशेषादेकत्वं सिद्धम् ।) तदनुविधानात्पृथक्त्वम् । विभुवचनात्परममहत्परिमाणम् । शब्दकारणत्ववचनात्संयोगविभागौ । अतो गुणवत्त्वादनाश्रितत्वाच्च द्रव्यम् । समानासमानजातीयकारणाभावाच्च नित्यम् । सर्वप्राणिनां शब्दोपलब्धौ निमित्तं श्रोत्रभावेन, श्रोत्रं पुनः श्रवणविवरसंज्ञको नभोदेशः शब्दनिमित्तोपभोगप्रापकधर्माऽधर्मोपनिबद्धः । तस्य च नित्यत्वे सति उपनिबन्धकवैकल्याद्बाधिर्यम् ।

कालः परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गः । तेषां विषये पूर्वप्रत्ययविलक्षणानां प्रत्ययानामुत्पत्तावन्यनिमित्ताभावाद्यदत्र निमित्तं स कालः सर्वकार्याणामुत्पत्तिस्थितिविनाशहेतुः । तद्व्यपदेशात् क्षणलवनिमेषकाष्ठाकलामुहूर्तयामाहोरात्रार्धमासमासर्त्वयनसंवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुः । तस्य गुणाः सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाः । काललिङ्गाविशेषादेकत्वं

---

१ शब्दरूपस्य लिङ्गस्याविशेषादऽविशिष्टत्वेन नानात्वाऽसाधकत्वात् विशेषलिङ्गाभावाच्चेत्यपि बोध्यम्.

२ तदनुविधानात्तदेकत्वमनुविधानान्नियमेनानुवर्तनात्पृथक्त्वमेकपृथक्त्वमस्ति यानुविधान यत्र यदेकत्वं तत्रैवैकपृथक्त्वमिति.

३ विभवान्महानाकाशस्तथा चात्मा ७।१।२२। इति सूत्रेण.

४ संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः ७२।२।३१। इति सूत्रे शब्दस्याऽसमवायिकारणयोरपि संयोगविभागयोर्वचनात्सिद्धं समवायिकारणाकाशवृत्तित्वम्.

५ गुणवचनात् पा. १ पु. गुणानामेकपृथक्त्वादीनां वचनात्सिद्धं गुणिनो द्रव्यत्वम्.

६ अनाश्रितत्वात् द्रव्यानाश्रितत्वात्. उपनिबन्धकानां धर्माऽधर्मादीनां वैकल्याद्वैधुर्यात् २ पु. वैधुर्यादित्येव पाठः

७ तेषां प्रत्ययानां विषये पाठौ. २ पु. विषयेषु. पा.

८ कार्योत्पत्त्यादिव्यपदेशात्. भावे यद्वहुगो व्यपदेशः.

९ हेतुश्च. पा. २ पु.

सिद्धम्। तदनुविधानादेकत्वम्। कारणे काल इति वचनात्परममहत्परिमाणम्। कारणपरत्वादिति वचनात्संयोगः। तद्विनाशाद्विभागः। तस्याकाशवद्द्रव्यत्वनित्यत्वे सिद्धे काललिङ्गाविशेषादञ्जसैकत्वे सर्वकार्याणां प्रारम्भक्रियाभिनिर्वृत्तिस्थितिनिरोधोपाधिभेदान्मणिवत्पाचकवद्वा नानात्वोपचार इति॥

दिक्पूर्वापरादिप्रत्ययलिङ्गा। मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येषु अस्मादिदं पूर्वेण दक्षिणेन पश्चिमेनोत्तरेण पूर्वदक्षिणेन दक्षिणपश्चिमेनोत्तरपूर्वेणाधस्तादुपरिष्टाच्चेति दश प्रत्यया यतो भवन्ति सा दिगिति। अन्यनिमित्तासम्भवात्। तस्यास्तु गुणाः सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाः कालवदेते सिद्धाः। दिग्लिङ्गाविशेषादञ्जसा दिश एकत्वेऽपि परमर्षिभिः श्रुतिस्मृतिलोकव्यवहारार्थं मेरुं प्रदक्षिणमावर्तमानस्य भगवतः सवितुर्ये संयोगास्तेषां लोकपालपरिगृहीतानां दिक्प्रदेशानामन्वर्थाः प्राच्यादिभेदेन दशविधाः संज्ञाः कृताः। ततो भक्त्या दश दिशः सिद्धाः। तासामेव देवतापरिग्रहात्पुनर्दशसंज्ञा भवन्ति। माहेन्द्री वैश्वानरी याम्या नैर्ऋती वारुणी वायव्या कौबेर्यैशानी ब्राह्मी नागी चेति॥

आत्मत्वाभिसम्बन्धादात्मा। तस्य सौक्ष्म्यादप्रत्यक्षत्वे सति क-

---

१ कारणे काल ।७।१।२५। परादिप्रत्ययकारणे द्रव्ये काल इति समाख्यानात्तत्प्रत्ययस्य च सर्वदेशानुगमसाधारण्येन कालस्य व्यापकत्वमन्तरेणासम्भवात् सिद्धं कारणे काले परममहत्परिमाणम्।

२ कारणपरत्वात्कारणापरत्वाच्च ।७।२।२२। इति सूत्रेण परत्वापरत्वोत्पत्तौ, असमवायिकारणस्य कालपिण्डसंयोगस्य कथनात्सिद्धः काले संयोगः।

३ यथा जपाकुसुमरागवशान्मणेर्नानात्वम्पाककर्तृत्वाच्च पाचकस्यैकस्यापि नानात्वमेवमत्रापि।

४ अन्वर्था यौगिकाः।

५ भक्त्या उपचारेण

६ सौक्ष्म्यात् अमहत्त्वात्

७ करणै वा २ पृ

रणैः शब्दाद्युपलब्ध्यनुमितैः श्रोत्रादिभिः समधिगमः क्रियते । वास्यादीनां करणानां कर्तृप्रयोज्यत्वदर्शनात् । शब्दादिषु प्रसिद्ध्या च प्रसाधकोऽनुमीयते । न शरीरेन्द्रियमनसामज्ञत्वात् । न शरीरस्य चैतन्यं घटादिवत् भूतकार्यत्वात् । मृते चाऽसम्भवात् । नेन्द्रियाणां करणत्वादुपहतेषु विषयासान्निध्ये चानुस्मृतिदर्शनात् । नापि मनसः करणान्तराऽपेक्षत्वे युगपदालोचनानुस्मृतिदर्शनप्रसंगात्स्वयं करणभावाच्च । परिशेषादात्मकार्यं ज्ञानं तेनात्मा समधिगम्यते । शरीरसमवायिनीभ्यां हिताहितप्राप्तिपरिहारयोग्याभ्यां प्रवृत्तिनिवृत्तिभ्यां रथकर्मणा सारथिवत्प्रयत्नवान् विग्रहस्याधिष्ठाताऽनुमीयते । प्राणादिभिश्च, कथं शरीरपरिगृहीते वायौ विकृतकर्मदर्शनात् भस्त्राध्मापयितेव । निमेषोन्मेषकर्मणा नियतेन दारुयन्त्रप्रयोक्तेव । देहस्य वृद्धिभग्नक्षतसंरोहणाभ्यां गृहपतिरिव । अभिमतग्राहककरणसम्बन्धनिमित्तेन मनःकर्मणा गृहकोणोपलप्रेरकदारकैः इव । नयनविषयालोचनानन्तरं रसानुवृत्तिक्रमेण रसनविक्रियादर्शनादनेकगवाक्षान्तर्गतप्रेक्षकवदुभयदर्शी कश्चिद्विज्ञायते । सुखदुःखेच्छाद्वेषप्रयत्नैश्च गुणैर्गुण्यनुमीयते । एते, न च शरीरेन्द्रियविशेषगुणाः । कस्मात् । अहङ्कारेणैकवाक्यताभावात् । प्रदेशवृत्तित्वादयावद्द्रव्यभावित्वाद्बाह्येन्द्रियाप्रत्यक्षत्वात् तथाहंशब्देनापि पृथिव्यादिशब्दव्यतिरेकादिति । तस्य गुणाः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मसंस्कारसंख्यापरिमाणपृथक्त्वसंयोगविभागाः । आत्मलिङ्गाधिकारे बुद्ध्यादय.

---

१ प्रसिद्ध्या ज्ञानेन.

२ अभिमतविषयग्राहककरणसम्बन्धनिमित्तमनःकर्मणा पा. २ पु

३ गृहकोणव्यवस्थितपेलकप्रेरक—पा. २ पु. पेलकः कन्दुकविशेष..

४ दारको बालकः

५ तेच न—पा. २ पु

६ प्रदेशवृत्तित्वात् अव्याप्यवृत्तित्वात्

प्रयत्नान्ताः सिद्धाः । धर्माधर्मावात्मान्तरगुणानामकारणत्ववचनात् । संस्कारः स्मृत्युत्पत्तौ । व्यवस्थावचनात्सङ्ख्या । पृथक्त्वमप्यत एव । तथा चात्मेति वचनात्परममहत्परिमाणम् । (सन्निकर्षजत्वात्सुखादीनां संयोगः । तद्विनाशकत्वाद्विभाग इति ।) मनस्त्वाभिसम्बन्धान्मनः । सत्यप्यात्मेन्द्रियार्थसान्निध्ये ज्ञानसुखादीनामभूत्वोत्पत्तिदर्शनात्कारणान्तरमनुमीयते श्रोत्राद्यव्यापारे स्मृत्युत्पत्तिदर्शनात् बाह्येन्द्रियैरगृहीतसुखादिग्राहकान्तराऽभावाच्चेति । तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वसंस्काराः । प्रयत्नज्ञानायौगपद्यवचनात्प्रतिशरीरमेकत्वम् । पृथक्त्वमप्यत एव तदभाववचनादणुपरिमाणम् । अपसर्पणोपसर्पणवचनात्संयोगविभागौ । मूर्त्तत्वात्परत्वाऽपरत्वसंस्काराश्च । अस्पर्शवत्त्वाद्द्रव्यानारम्भकत्वम् । क्रियावत्त्वान्मूर्त्तत्वम् । साधारणविग्रहवत्त्वप्रसंगादज्ञम् । करणभा-

१ सिद्धा वचनात् तथाच. सू—इन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिंगानि ३।२।४।

२ आत्मान्तरगुणानामात्मान्तरे कारणत्वात् ६।१।५। धर्माधर्मावात्मान्तरगुणेष्वात्मान्तरगुणानामकारणवचनात्. पा. २ पु. आत्मान्तरगुणा धर्माधर्मौ.

३ वचनादिति शेषस्तथा च स्मृत्युत्पत्तौ संस्कारस्य कारणतया वचनात्स्मृत्याश्रये संस्कारः सिद्धः कार्यकारणयोरैकाधिकरण्यात्. सू. आत्ममनसोः संयोगविशेषात्संस्काराच्च स्मृतिः ९।२।६.

४ व्यवस्थातो नाना ३।२।२०।

५ अत एव संख्यात एव, तदनुविधानात्पृथक्त्वं सिद्धम्.

६ विभवान्महानाकाशस्तथा चात्मा ७।१।२२।

७ अभूत्वोत्पत्ति. पा. २ पु.

८ प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ३।२।३।

९ आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिंगम् ३।२।१। इत्यनेन तदभावस्य ज्ञानाभावस्य मनोलिङ्गत्वेन वचनादण्वेव मनः सिद्धं भवति । विभुत्वे हि सर्वेन्द्रियसन्निकर्षात्सर्वज्ञानोत्पत्तौ ज्ञानभावोऽनुपपन्नः.

१० अपसर्पणमुपसर्पणमित्यादि ५।२।१७। सूत्रेण अपसर्पणं पूर्वदेशादुत्क्रमणमुपसर्पणं देहान्तरे प्रवेश इति मनःकर्मविशेषयोः कथनात्पूर्वदेहविभागोत्तरदेहसंयोगसिद्धौ सिद्धौ मनसि संयोगविभागौ.

थाऽपरार्थम् । गुणवत्त्वात्द्रव्यम् । प्रयत्नादृष्टपरिग्रहवशादाशुसञ्चारित्वमिति । इति द्रव्यपदार्थः समाप्तः ॥

रूपादीनां गुणानां सर्वेषां गुणत्वाभिसम्बन्धो द्रव्याश्रितत्वं निष्क्रियत्वं निर्गुणत्वं च । रूपरसगन्धस्पर्शपरत्वाऽपरत्वगुरुत्वद्रवत्वस्नेहवेगा मूर्तगुणाः[1] । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मभावनाशब्दा अमूर्तगुणाः[2] । संख्यापरिमाणपृथक्त्वसंयोगविभागा उभयगुणाः । संयोगविभागद्वित्वपृथक्त्वादयोऽनेकाश्रिताः शेषास्त्वेकैकवृत्तयः । रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वबुद्धि सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा वैशेषिकगुणाः[3] । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वगुरुत्वनैमित्तिकद्रवत्ववेगाः सामान्यगुणाः । शब्दस्पर्शरूपरसगन्धा बाह्यैकैकेन्द्रियग्राह्याः । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वद्रवत्वस्नेहवेगात् द्वीन्द्रियग्राह्याः । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नास्त्वन्तःकरणग्राह्याः । गुरुत्वधर्माधर्मभावना अतीन्द्रियाः । अपाकजरूपरसगन्धस्पर्श परिमाणैकत्वैकपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगाः कारणगुणपूर्वकाः । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा अकारणगुणपूर्वकाः । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दतूलपरिमाणोत्तरसंयोगनैमित्तिकद्रवत्वपरत्वापरत्वपाकजाः संयोगजाः संयोगविभागवेगाः कर्मजाः । शब्दोत्तरविभागौ विभागजौ । परत्वाऽपरत्वद्वित्वद्विपृथक्त्वादयो बुद्ध्यपेक्षाः । रूपरसगन्धानुष्णस्पर्शशब्दपरिमाणैकत्वैकपृथक्त्वस्नेहाः समानजात्यारम्भकाः । सुखदुःखेच्छाद्वेषप्रयत्ना असमानजात्यारम्भकाः । संयोगविभागसंख्यागुरुत्वद्रवत्वोष्णस्पर्शज्ञानधर्माधर्मसंस्काराः समानाऽसमानजात्यारम्भकाः । बुद्धिसुखदुःखेच्छाद्वेषभावनाशब्दाः स्वाश्रयसमवेतारम्भकाः । रूपरसग-

---

१ मूर्तिगुणाः पा. २ पु.

२ अमूर्तकगुणाः पा. २ पु.

३ द्रव्यविशेषव्यवस्थापका असाधारणगुणाः.

न्धस्पर्शपरिमाणस्नेहप्रयत्नाः परत्रारम्भकाः । संयोगविभागसंख्यैकत्वपृथक्त्वगुरुत्वद्रवत्ववेगधर्माधर्मास्तूभयत्रारम्भकाः । गुरुत्वद्रवत्ववेगप्रयत्नधर्माधर्मसंयोगविशेषाः क्रियाहेतवः । रूपरसगन्धानुष्णस्पर्शसंख्यापरिमाणैकपृथक्त्वस्नेहशब्दानां चाऽसमवायिकारणत्वम् । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मभावनानां निमित्तकारणत्वम् । संयोगविभागोष्णस्पर्शगुरुत्वद्रवत्ववेगानामुभयथा कारणत्वम्[१] । परत्वाऽपरत्वद्वित्वद्विपृथक्त्वादीनामकारणत्वम् । संयोगविभागशब्दात्मगुणानां प्रदेशवृत्तित्वम् । शेषाणामाश्रयव्यापित्वम् । अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वसांसिद्धिकद्रवत्वस्नेहानां यावद्द्रव्यभावित्वम् । शेषाणामयावद्द्रव्यभावित्वमिति ॥

रूपादीनां सर्वेषां गुणानां प्रत्येकमपरसामान्यसंबन्धाद्रूपादिसंज्ञा भवन्ति तत्र रूपं चक्षुर्ग्राह्यम् । पृथिव्युदकज्वलनवृत्ति । द्रव्याद्युपलम्भकं नयनसहकारि शुक्लाद्यनेकप्रकारम् । सलिलादिपरमाणुषु नित्यम् । पार्थिवपरमाणुष्वग्निसंयोगविरोधि । सर्वकार्येषु कारणगुणपूर्वकम् । आश्रयविनाशादेव विनश्यतीति । रसो रसनेन्द्रियग्राह्यः पृथिव्युदकवृत्तिः जीवनपुष्टिबलारोग्यनिमित्तं रसनसहकारी मधुराम्ललवणकटुतिक्तकषायभेदभिन्नः । तस्यापि नित्यानित्यनिष्पत्तयो रूपवत् । गन्धो घ्राणग्राह्यः पृथिवीवृत्तिः । घ्राणसहकारी सुरभिरसुरभिश्च । अस्यापि पूर्ववदुत्पत्तयो व्याख्याताः । स्पर्शस्त्वगिन्द्रियग्राह्यः क्षित्युदकज्वलनपवनवृत्तिः । त्वक्सहकारी । रूपानुवि-

१ परत्र स्वाश्रयातिरिक्ते.

२ आत्मधर्मज्ञानादिभिन्नकार्यापेक्षया.

३ चक्षुषा द्रव्याद्युपलब्धौ तत्सहकारि, चाक्षुषप्रत्यक्षे समवायादिसम्बन्धेन रूपस्य कारणत्वात्.

४ पाकजमनित्यमिति यावत्

५ रसप्रभवेलरासनप्रत्यक्षे सहकारी कारणम्.

६ त्वचा द्रव्यादिप्रत्यक्षे.

धार्या । शीतोष्णानुष्णाऽशीतभेदात्त्रिविधः । अस्यापि नित्याऽनित्यनिष्पत्तयः पूर्ववत् ॥

पार्थिवपरमाणुषु रूपादीनां पाकजोत्पत्तिविधानम् । घटादेरामद्रव्यस्याग्निना संबद्धस्याग्न्यभिघातान्नोदनाद्वा तदारम्भकेष्वणुषु कर्माण्युत्पद्यन्ते । तेभ्यो विभागाः । विभागेभ्यः संयोगविनाशाः । संयोगविनाशेभ्यः कार्यद्रव्यं विनश्यति । तस्मिन्विनष्टे परमाण्वग्निसंयोगादौष्ण्यापेक्षात् श्यामादीनां विनाशः । पुनरन्यस्मात्संयोगादौष्ण्यापेक्षात्पाकजा जायन्ते । तदनन्तरं भोगिनामदृष्टापेक्षादात्माणुसंयोगादुत्पन्नपाकजेष्वणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगाद्द्व्यणुकादिक्रमेण कार्यद्रव्यमुत्पद्यते । तत्र कारणगुणप्रक्रमेण रूपाद्युत्पत्तिः । न च कार्यद्रव्ये रूपादीनां विनाश उत्पत्तिर्वा संभवति । सर्वावयवेष्वन्तर्बहिश्च वर्तमानस्याग्निना आप्यभावात् । अणुप्रवेशादपि प्राप्तिर्न भवति कार्यद्रव्यविनाशादिति ॥

एकादिव्यवहारहेतुः संख्या । सा पुनरेकद्रव्या चानेकद्रव्या च । तत्रैकद्रव्यायाः सलिलादिपरमाणुरूपादीनामिव नित्याऽनित्यनिष्पत्तयः । अनेकद्रव्या तु द्वित्वादिका परार्धान्ता । तस्याः खल्वेकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिः । अपेक्षाबुद्धिविनाशाच्च विनाश इति, कथम् । यदा बोद्धुश्चक्षुषा समानाऽसमानजातीययोर्द्रव्ययोः सन्निकर्षे सति १ तत्संयुक्तसमवेतसमवेतैकत्वसामान्यज्ञानोत्प-

---

१ रूपासमानाधिकरणात्यन्ताभावाऽप्रतियोगी

२ एतद्वारापरस्यैव स्पष्टार्थं द्व्यणुकादिनाशादारभ्य रूपादिमदुत्पत्तिपर्यन्तं नवद्वैत्र्यादिक्षणप्रक्रिया मुक्तावल्यां दर्शिता.

३ वर्तमानस्य द्रव्यस्य.

४ व्याप्त्यभावात्. पा. २ पु

५ व्याप्तिः. पा. २ पु.

६ तेन चक्षुषा संयुक्तयोर्द्रव्ययोः समवेते एकत्वसामान्ये तयोः समवेतमेकत्वसामान्यमेकत्वनिष्ठमेकत्वत्वरूपमपरसामान्यं तस्य ज्ञानं निर्विकल्पात्मकं तस्योत्पत्तावित्यर्थः

त्वे २ कत्वसामान्यसम्बन्धज्ञानेभ्यः एकगुणयोरनेकविषयिण्येका बुद्धिरुत्पद्यते ३ तदा तामपेक्ष्यैकत्वाभ्यां स्वाश्रययोर्द्वित्वमारभ्यते ४ । ततः पुनस्तस्मिन् द्वित्वसामान्यज्ञानमुत्पद्यते । तस्माद्वित्वसामान्यज्ञानादपेक्षाबुद्धेर्विनश्यत्ता । द्वित्वसामान्यतज्ज्ञानतत्संबन्धेभ्यो द्वित्वगुणबुद्धेरुत्पद्यमानतेत्येकः कालः ५ । तत इदानीमपेक्षाबुद्धिविनाशात् द्वित्वगुणस्य विनश्यत्ता । द्वित्वगुणबुद्धितः सामान्यबुद्धेर्विनश्यत्ता । द्वित्वगुणतज्ज्ञानतत्संबन्धेभ्यो द्वे द्रव्ये इति द्रव्यज्ञानस्योत्पद्यमानतेत्येकः कालः ६ । तदनन्तरं द्वे द्रव्ये इति ज्ञानस्योत्पादो द्वित्वविनाशः । संस्कारस्योत्पद्यमानता । गुणबुद्धेर्विनश्यत्ता । सामान्यबुद्धेर्विनाश इत्येकः कालः ७ । तदनन्तरं द्रव्यज्ञानाद्द्वित्वगुणबुद्धेर्विनाशः ८ । क्षणान्तरे द्रव्यबुद्धेरपि विनाशः संस्कारादिति[15] । एतेन[16] त्रित्वाद्युत्प-

---

१ एकत्वसामान्यसम्बन्धतज्ज्ञानेभ्यः पा. २ पु.

२ एकत्वत्वसामान्यविशिष्टैकत्वगुणसमूहालम्बनरूपा एका बुद्धिरित्यर्थः इयमेवापेक्षाबुद्धिः

३ तां बुद्धिम्.

४ द्वित्वत्वसामान्यविषयक विशेषणज्ञानम्.

५ यस्मिन् क्षणे यस्य यस्माद्विनश्यत्ता [(विनश्यदवस्था) उत्पद्यमानता वा ] तदुत्तरक्षणे तस्य तस्माद्विनाशः उत्पत्तिर्वा । एवं यस्य यस्माद्यदा विनाश उत्पत्तिर्वा तत्पूर्वक्षणे तस्य तस्माद्विनश्यत्ता उत्पद्यमानता वा बोध्या एवं सर्वत्रबोध्यम्.

६ द्वित्वसामान्यतत्संबन्धतज्ज्ञानेभ्यः पा. २ पु. एवमग्रेऽपि पा. २ पु.

७ सामान्यबुद्धेर्द्वित्वसामान्यबुद्धेः पा. २ पु. सामान्यबुद्धेरपि.

८ द्रव्यबुद्धेः पा. २ पु.

९ उत्पादे. पा. २ पु

१० संस्कारस्य द्रव्यज्ञानसंस्कारस्य.

११ गुणबुद्धेर्द्वित्वगुणबुद्धेः.

१२ द्वित्वसामान्यबुद्धेः पा २ पु.

१३ गुणबुद्धिविनाशो द्रव्यज्ञानस्य संस्कारस्माद्विनश्यत्ता चेत्येकः कालः

१४ संस्काराज्ज्ञानान्तराद्वेत्यपि बोध्यम्.

१५ इति द्वित्वोत्पादविनाशक्रमे इन्द्रियसन्निकर्षमारभ्य द्रव्यज्ञाननाशान्तं नवक्षणाः.

१६ अनेन पा. २ पु.

तिर्व्याख्याता । एकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिरपेक्षाबुद्धिविनाशाद्विनाश इति ॥

क्वचिदाश्रयविनाशादपि विनाशः । कथम् । यदैकत्वाधारावयवे कर्मोत्पद्यते तदैकत्वसामान्यज्ञानमुत्पद्यते १ कर्मणा चावयवान्तराद्विभागः । अपेक्षाबुद्धेश्चोत्पत्तिः २ । ततो यस्मिन्नेव काले विभागात्संयोगविनाशस्तस्मिन्नेव काले द्वित्वमुत्पद्यते ३ । संयोगविनाशाद्द्रव्यविनाशः सामान्यबुद्धेश्चोत्पत्तिः ४ । ततो यस्मिन्नेव काले सामान्यज्ञानापेक्षाबुद्धेर्विनाशः । तस्मिन्नेव काले आश्रयविनाशाद्द्वित्वविनाशः ५ । शोभनमेतद्विधानं वध्यघातकपक्षे । सहानवस्थानलक्षणे तु विरोधे द्रव्यज्ञानानुत्पत्तिप्रसङ्गः । कथम् । गुणबुद्धिसमकालमपेक्षाबुद्धिविनाशात् द्वित्वविनाशे तदपेक्षस्य द्वे द्रव्ये इति द्रव्यज्ञानस्याभावप्रसङ्ग इति । लैङ्गिकवज्ज्ञानमात्रादिति चेत् स्यान्मतं यथाभूतं भूतस्येत्यत्र लिङ्गाभावेऽपि ज्ञानमात्रादनुमानं तथा गुणविनाशे गुणबुद्धिमात्राद् द्रव्यप्रत्ययः स्यादिति । न विशेष्यज्ञानत्वात् । नहि विशेष्यज्ञानं सारूप्याद्विशेषणसम्बन्धमन्तरेण भवितुमर्हति । तथा चाह सूत्रकारः । समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेतबुद्धिः । ते एते कार्यकारणभूता इति । ननु लिङ्गज्ञानमभेदेनोत्पद्यते इति ।

---

१ सामान्ये. पा. २ पु.

२ विभागः क्रियते सामान्यज्ञानादपेक्षाबुद्धे. पा. २ पु.

३ इयं प्रक्रिया ज्ञानयोर्वध्यघातकपक्षे सगच्छते.

४ तेजोऽन्धकारयोरिव.

५ [illegible] ानुत्पत्तेः.

[illegible] वैशेषिकलिङ्गोदाहरणे यथा अभूतेन [illegible] भूतस्यासंयोगस्यानुमानमेवं द्वित्वेऽसत्यपि तज्ज्ञानाद्द्वित्वविशिष्टद्रव्यज्ञानं स्यादिति भावः.

७ विशेष्यज्ञानं विशिष्टज्ञानं सारूप्याल्लैङ्गिकज्ञानसादृश्यात्.

८ ८।१।९। विशेषणसंबन्धाद्विशेषणतज्ज्ञानाभ्यां विशिष्टप्रत्ययं प्रति कारणत्वमिति भावः.

९ दृष्टान्तवैषम्यमाह ननु इत्यादिना.

किन्तु साध्यसाधनभेदेन तस्माद्विषयोऽयमुपन्यासः । न आशूत्पत्तेः । यथा शब्दवदाकाशमित्यत्र त्रीणि लिङ्गज्ञानान्युत्पद्यन्ते तथा द्वित्वज्ञानोत्पत्तिरित्यदोषः । वध्यघातकपक्षेऽपि समानो दोषः इति चेत् । स्यान्मतम् । वध्यघातकपक्षेऽपि तर्हि द्रव्यज्ञानानुत्पत्तिप्रसङ्गः । कथं द्वित्वसामान्यबुद्धिसमकालं संस्कारादपेक्षाबुद्धिविनाशादिति । न समूहज्ञानस्य संस्कारहेतुत्वात् समूहज्ञानमेव संस्कारकारणं नालोचनज्ञानमित्यदोषः । ज्ञानयौगपद्यप्रसङ्ग इति चेत् स्यान्मतम् । ननु ज्ञानानां वध्यघातकविरोधे ज्ञानयौगपद्यप्रसङ्ग इति न । अविनश्यतोर्युगपदवस्थानप्रतिषेधात् । ज्ञानयौगपद्यवचनेन ज्ञानयोर्युगपदुत्पत्तिरविनश्यतोश्च युगपदवस्थानं प्रतिषिध्यते । नहि वध्यघातकविरोधे ज्ञानयोर्युगपदुत्पत्तिरविनश्यतोश्च युगपदवस्थानमिति ।

परिमाणं मानव्यवहारकारणम् । तच्चतुर्विधमणुमहद्दीर्घं ह्रस्वं च । तत्र महत्द्विविधम् । नित्यमनित्यं च । नित्यमाकाशकालदिगात्मसु परममहत्त्वम् । अनित्यं त्र्यणुकादावेव । तथाण्वपि द्विविधम् । नित्यं परमाणुमनःसु तच्च पारिमाण्डल्यम् । अनित्यं द्व्यणुक एव । कुवलामलकबिल्वादिषु महत्स्वपि तत्प्रकर्षभावाभावमपेक्ष्य भाक्तोऽणुव्यवहारः ॥ दीर्घह्रस्वत्वे उत्पाद्यमहदणुत्वैकार्थे समवेते । समिदिक्षुवंशादिष्वञ्जसा दीर्घेष्वपि तत्प्रोत्कर्षभावाभावमपेक्ष्य भाक्तो ह्रस्वव्यवहारः । अनित्यं चतुर्विधमपि संख्यापरिमाणप्रचययोनि॰ तत्रेश्वरबुद्धिमपे-

---

१ अयं भावः । नहि केवलगुणज्ञानं संस्कारकारणं केवलगुणस्य स्मृतेरदर्शनात् । नहि केवलो गुणः क्वापि स्मर्यते द्रव्योपरागेणैव सर्वत्र गुणस्मरणादपितु समूहज्ञानं द्रव्यसमवेतत्वया गुणज्ञानं विशिष्टज्ञानं वा.

२ इति संख्या पा. २ पु.

३ तस्य महत्त्वस्य प्रकर्षभावस्तस्याभावमिति.

४ भाक्तो गौणः.

५ उत्पाद्ये जन्येऽनित्ये ये महदणुत्वे ताभ्यां सहैकस्मिन्नर्थे समवेते २ पु. दीर्घह्रस्वत्वे तूत्पाद्येत्यादि. पाठः.

६ तत्प्रकर्षेत्यादि. पा २ पु.

त्र्योत्पन्ना परमाणुद्व्यणुकेषु बहुत्वसङ्ख्या तैरारब्धे कार्यद्रव्ये त्र्यणुकादिलक्षणे रूपाद्युत्पत्तिसमकालं महत्त्वं दीर्घत्वं च करोति । द्विबहुभिर्महद्भिरारब्धे कार्यद्रव्ये कारणमहत्त्वान्येव महत्त्वमारभन्ते न बहुत्वं समानसंख्यैरारब्धेऽतिशयदर्शनात् । प्रचयस्[1]तूलपिण्डयोर्वर्तमानः पिण्डारम्भकप्रशिथिलसंयोगापेक्ष इतरेतरपिण्डावयवसंयोगापेक्षो[2] वा द्वितूलके महत्त्वमारभते न बहुत्वमहत्त्वे समानसङ्ख्यपरिमाणैरारब्धेऽतिशयदर्शनादिति । द्वित्वसंख्या चाण्वोर्वर्तमाना द्व्यणुकेऽणुत्वमारभते । महत्त्ववत्त्र्यणु[3]कादौ कारणबहुत्वसमानजातीयप्रचयेभ्यो दीर्घत्वस्योत्पत्तिः । अणुत्ववद्व्यणुके द्वित्वसंख्यातो ह्रस्वत्वस्योत्पत्तिः । अथ त्र्यणुकादिषु वर्तमानयोर्महत्त्वदीर्घत्वयोः परस्परतः को विशेषः द्व्यणुके वा अणुत्वह्रस्वत्वयोरिति । तत्रास्ति महत्त्वदीर्घत्वयोः परस्परतो विशेषः । महत्सु दीर्घमानीयतां दीर्घेषु च महदानीयतामिति व्यवहारदर्शनात् । अणुत्वह्रस्वत्वयोः परस्परतो विशेषस्तद्दर्शिनां प्रत्यक्ष इति । एतच्चतुर्विधमप्युत्पाद्यमाश्रयविनाशादेव विनश्यतीति[4] ॥

पृथक्त्वमपोद्धार[5]व्यवहारकारणम् । तत्पुनरेकद्रव्यमनेकद्रव्यं च तस्य तु नित्यानित्यनिष्पत्तयः सङ्ख्यया व्याख्याताः । एतावाँस्तु विशेषः एकत्वादिवदेकपृथक्त्वादेरपरसामान्याभावः[6] । संख्यया तु विशिष्यते । तद्विशिष्टव्यवहारदर्शनात्[7] । संयोगः संयुक्तप्रत्ययनिमित्तम् । स च द्रव्यगुणकर्महेतुः । द्रव्यारम्भे निरपेक्षः । तथा भवतीति सापेक्षेभ्योऽनपेक्षेभ्य इति वचनात् । कर्मगुणारम्भे तु सापेक्षः । संयुक्तस-

---

१ प्रचयः शिथिलसंयोगः.
२ कर्मगुणारम्भे सापेक्षस्यैव संयोगस्य कारणत्वात्.
३ महत्त्ववति त्र्यणुकादौ.
४ संख्या इत्यधिकः पा. २ पु.
५ अनवृत्य अवधिमपेक्ष्य य उद्धारो निर्धारणं स अपोद्धारः.
६ अपरसामान्याभावः । संख्यया तु. पा. २ पु.
७ इति पृथक्त्वम्. पा. २ पु.

मवायादेर्वैशेषिकमिति वचनात् । अथ कथं लक्षणकः कतिविधश्चेति । अप्राप्तयोः प्राप्तिः संयोगः । स तु त्रिविधः अन्यतरकर्मजः उभयकर्मजः संयोगजश्चेति । तत्रान्यतरकर्मजः क्रियावता निष्क्रियस्य यथा स्थाणोः श्येनेन विभूनां मूर्त्तैः सह । उभयकर्मजो विरुद्धदिक्क्रिययोः सन्निपातः । यथा मल्लयोर्मेषयोर्वा । संयोगजस्तूत्पन्नमात्रस्यैव चिरोत्पन्नस्य वा निष्क्रियस्य कारणसंयोगिभिरकारणैः कारणाकारणसंयोगपूर्वकः कार्याकार्यगतः संयोगः । स चैकस्माद्द्वाभ्यां बहुभ्यश्च भवति । एकस्माच्चावत्तन्तुवीरणसंयोगाद्द्वितन्तुकवीरणसंयोगः । द्वाभ्यां तन्त्वाकाशसंयोगाभ्यां द्वितन्तुकाकाशसंयोगः । बहुभ्यश्च तन्तुतुरीसंयोगेभ्य एकः पटतुरीसंयोगः । एकस्माच्च द्वयोरुत्पत्तिः कथम् । यदा पार्थिवाप्ययोरण्वोः संयोगे सति अन्येन पार्थिवेन पार्थिवस्यान्येनाप्येनाप्यस्य युगपत्संयोगौ भवतः तदा द्वाभ्यां संयोगाभ्यां पार्थिवाप्यद्व्यणुके युगपदारभ्येते । ततो यस्मिन्नेव काले द्व्यणुकयोः कारणगुणपूर्वक्रमेण रूपाद्युत्पत्तिस्तस्मिन्नेव काले इतरेतरकारणाकारणगतात्संयोगादितरेतरकार्याकार्यगतौ संयोगौ युगपदुत्पद्येते किंकारणम् । कारणसंयोगिना हि कार्यमवश्यं युज्यत इति न्यायः । अतः पार्थिवद्व्यणुकं कारणसंयोगिनाप्येनाणुना संयुज्यते । आप्यमपि द्व्यणुकं पार्थिवेनेति ॥

अथ द्व्यणुकयोरितरेतरकारणसंबद्धयोः कथं परस्परतः संबन्ध इति । तयोरपि संयोगजाभ्यां संयोगाभ्यां संबन्ध इति । नास्त्यजः संयोगः ।

---

१ सू० १०।२।७

२ उत्पन्नमात्रस्य निष्क्रियस्य द्वितन्तुकस्य पटस्य, कारणसंयोगिना कारणस्य तन्तोः संयोगिना अकारणेन वीरणेन तृणविशेषेण यः संयोगः स एकस्मात्कारणस्य तन्तोरकारणेन वीरणेन संयोगात् कार्ये द्वितन्तुकपटेऽकार्ये वीरणे जायते, एवमग्रेऽपि । चिरोत्पन्नस्योदाहरणमंगुलीतरुसंयोगात्कायतरुसंयोगादि

३ इतरेतरकारणाभ्यां पार्थिवेतरसंयोगौ ताभ्यां परस्परसंयोगाभ्यां मिथः संबन्ध इति.

नित्यपरिमाण्डल्यवत्पृथगनभिधानात्। यथा चतुर्विधं परिमाणमुत्पाद्यमुक्त्वाऽऽह[1] नित्यं परिमाण्डल्यमिति[2]। एवमन्यतरकर्मजादिसंयोगमुक्त्वा पृथङ्नित्यं ब्रूयात् न त्वेवमब्रवीत्तस्मान्नाजः संयोगोऽस्तीति। परमाणुभिराकाशादीनां प्रदेशवृत्तिरन्यतरकर्मजः संयोगः। विभूनां तु परस्परसंयोगो नास्ति। युतसिद्ध्यभावात्। सा पुनर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वं युताश्रयाश्रयित्वं[3] चेति। विनाशस्तु सर्वस्य संयोगस्यैकार्थसमवेताद्विभागात्[4]। क्वचिदाश्रयविनाशादपि। कथम्। तन्त्वोः संयोगे सति अन्यतरतन्त्वारम्भकेंऽशौ[5] कर्मोत्पद्यते। तेनांश्वन्तराद्विभागः क्रियते। विभागाच्च तन्त्वारम्भकसंयोगविनाशः। संयोगविनाशात्तन्तुविनाशः। तन्तुविनाशात्तदाश्रितस्य तन्त्वन्तरसंयोगस्य विनाश इति[6]। विभागो विभक्तप्रत्ययनिमित्तम्। शब्दविभागहेतुश्च। प्राप्तिपूर्विकाऽप्राप्तिर्विभागः। स च त्रिविधः अन्यतरकर्मज उभयकर्मजो विभागजश्च। तत्रान्यतरकर्मजोभयकर्मजौ संयोगवत्। विभागजस्तु द्विविधः कारणविभागात्कारणाकारणविभागाच्च। कारणविभागात्तावत् कार्याविष्टे कारणे कर्मोत्पन्नं यदाऽवयवान्तराद्विभागं[7] करोति न तदाकाशादिदेशात्। यदा त्वाकाशादिविभागं करोति न तदावयवान्तरादिति स्थितिः[8]। अतोऽवयवकर्माऽवयवान्तरादेव नि-

१ आह सूत्रकारः तथा च सू. नित्यं परिमण्डलम् ७।१।२०।

२ नित्यं परिमण्डलम् पा. २ पु.

३ पृथक्त्वं पृथग्भूय गतिमत्त्वमेतच्च नित्याभिप्रायेण युताश्रयाश्रयित्वमन्योन्यपरिहारेण पृथगाश्रयाश्रयित्वमेतदनित्यानाम् (पृथग्गतिमत्त्वमिति नित्यानामनित्यानां तु युतेष्वाश्रयेषु समवायो युतसिद्धिः) इति पा. २ पु.

४ एकार्थसमवेतात्समानाधिकरणात्

५ अंशौ तन्त्ववयवेंऽशौ

६ इति संयोग पा. २पु.

७ अवयवान्तरात् पा. २ पु.

८ एकस्य कर्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य अनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य च विरोधादेकं कर्म विभागद्वयकारणमिति भाव.

भागमारभते विभागाच्च द्रव्यारम्भकसंयोगविनाशः । तस्मिन्विनष्टे कारणाभावात्कार्याभावः इत्यवयविविनाशः । ततः कारणयोर्वर्तमानो विभागः कार्यविनाशविशिष्टं कालमपेक्ष्य स्वतन्त्रं वावयवमपेक्ष्य[1] सक्रियस्यावयवस्य कार्यसंयुक्ताकाशादिदेशाद्विभागमारभते[2] । न निष्क्रियस्य कारणाभावात् । उत्तरसंयोगानुत्पत्तावनुपभोग्यत्वप्रसङ्गात् । ननु तदवयवकर्माकाशादिदेशाद्विभागं[3] करोति तदारम्भकालस्यातीतत्वात् । तत्प्रदेशान्तरसंयोगं तु करोति । अकृतसंयोगस्य कर्मणः कालात्ययाभावा[4]दिति । कारणाकारणविभागादपि कथम् । यदा हस्ते कर्मोत्पन्नमवयवान्तराद्विभागमकुर्वदाकाशादिदेशेभ्यो विभागानारभ्य प्रदेशान्तरसंयोगमारभते तदा ते कारणाकारणविभागाः कर्म यां[5] दिशं प्रति कार्याभिमुखं तामपेक्ष्य कार्याकार्यविभागानारभन्ते तदनन्तरं कारणाकारणसंयोगाश्च कार्याकार्यसंयोगानिति । यदि कारणविभागानन्तरं कार्यविभागोत्पत्ति[6]कारणसंयोगानन्तरं कार्यसंयोगोत्पत्तिः नन्वेवं तर्ह्यवयवावयविनोर्युतसिद्धिदोषप्रसङ्ग इति[7] । न । युतसिद्ध्यपरिज्ञानात् । सा पुनर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वमितीयं नित्यानाम् । अनित्यानां तु युतेष्वाश्रयेषु समवायो युतसिद्धिरिति । त्वगिन्द्रियशरीरयोः पृथग्गतिमत्त्वं नास्ति युतेष्वाश्रयेषु समवायोऽस्तीति परस्परेण संयोगसिद्धिः । अण्वाकाशयोराश्रयान्तराभावेऽप्यन्यतरस्य पृथग्गतिमत्त्वात्संयोगविभागौ सिद्धौ । तन्तुपटयोरनित्ययोः पृथगाश्रयान्तराभावात्परस्परतः संयोगविभागा इति । दिगादीनां तु पृथग्गतिमत्त्वाभावात्परस्परेण

---

१ निरपेक्षस्य विभागजनने कर्मत्वापत्तिः स्यात्.

२ विभागं द्रव्यारम्भकसंयोगाऽप्रतिद्वन्द्विनम्.

३ तद्देशावयव. पा. २ पु.

४ अन्यथा कर्म न नश्येत्तस्योत्तरसंयोगमात्रनाश्यत्वात्.

५ या दिशं प्रति कर्माभिमुखं तां दिशमपेक्ष्येत्यन्वयः.

६ विभागोत्पत्तिः तथा पा. २ पु.

७ इति चेन्न पा. २ पु.

संयोगाभाव इति । विनाशस्तु सर्वस्य विभागस्योत्तरसंयोगावधिसम्भवात् क्षणिकत्वात् नतु संयोगवध्योर्विभागस्तयोरेव संयोगाद्विनाशो भवति संयुक्तप्रत्ययवद्विभक्तप्रत्ययानुवृत्त्यभावात् । तस्मादुत्तरसंयोगावधिसम्भवात्क्षणिकः ॥

क्वचिदाश्रयविनाशाद्विनश्यति । कथम् । यदा द्वितन्तुककारणावयवेऽंशौ कर्मोत्पन्नमवयवान्तराद्विभागमारभते तदैव तन्त्वन्तरे कर्मोत्पद्यते १ । विभागाच्च तन्त्वारम्भकसंयोगविनाशः तन्तुकर्मणा च तन्त्वन्तराद्विभागः क्रियते इत्येकः कालः २ । ततो यस्मिन्नेव काले विभागात्तन्तुसंयोगविनाशस्तस्मिन्नेव काले संयोगविनाशात्तन्तुविनाशः ३ । तस्मिन्विनष्टे तदाश्रितस्य तन्त्वन्तरविभागस्य विनाश ४ इति । नन्वेवं तर्हि उत्तरविभागानुत्पत्तिप्रसङ्गः कारणविभागाभावात् । ततश्च प्रदेशान्तरसंयोगाभाव इति । अतो विरोधिगुणाभावात्कर्मणश्चिरकालावस्थायित्वं नित्यसमवेतस्य च नित्यत्वमिति दोषः । कथम् । यदा द्व्यणुकारम्भके परमाणौ कर्मोत्पन्नमण्वन्तराद्विभागं करोति तदैवाण्वन्तरे कर्म १ । ततो यस्मिन्नेव काले विभागाद्द्व्यार-

---

१ उत्तरसंयोगस्यावधेः सम्भवात्सद्भावात् । एतच्च क्षणिकत्वे हेतुः उत्तरसंयोगावधिकत्वेन तन्नाश्यत्वात्क्षणिकत्वमिति. २ पु. क्षणिकत्वादुत्तरसंयोगावधिसद्भावात् पाठः

२ सद्भावात्. पा. २ पु.

३ द्वितन्तुकस्य पटस्य कारणं तन्तुस्तदवयवेऽंशावित्यर्थः

४ तन्त्वन्तरेऽपि कर्म पा. २ पु.

५ विभागाच्च. च पुनरर्थे.

६ तन्त्वोः संयोगनाश इति व्यस्तपाठः २ पु.

७ तन्त्वन्तराद्विभागस्य. पा. २ पु.

८ उत्तरविभागस्य तन्त्वाकाशविभागस्यानुत्पत्तिप्रसङ्ग इत्यर्थः.

९ कारणविभागस्य तन्त्वन्तरविभागस्याभावात्.

१० तत उत्तरविभागाभावात्

११ गुणासम्भवात्. पा. २ पु. कर्मणस्तन्त्वन्तरोत्पन्नकर्मणः.

१२ नित्यद्रव्यसमवेतस्य पा. २ पु.

१३ अण्वन्तरे द्व्यणुकानारम्भकेऽणौ. पा. २ पु. अण्वन्तरेऽपि. पा. २ पु.

म्भकसंयोगनाशस्तदैवाणुकर्मणा द्व्यणुकाण्वोर्विभागः २ । ततो यस्मिन्नेव काले विभागात्द्व्यणुकाणुसंयोगस्य विनाशस्तस्मिन्नेव काले संयोगविनाशात्द्व्यणुकविनाशः ३ । तस्मिन्विनष्टे तदाश्रयस्य द्व्यणुकाणुविभागस्य विनाशः ४ । ततश्च विरोधिगुणासम्भवात्कर्मणो नित्यत्वम् । न । तन्त्वंश्वन्तरविभागाद्विभाग इत्यदोषः । आश्रयविनाशात्तन्त्वोरेव विभागो विनष्टो न तन्त्वंश्वन्तरविभाग इति । तस्मादुत्तरो विभागः संजायते अंगुल्याकाशविभागाच्छरीराकाशविभागवदिति । तस्मिन्नुत्पन्ने कर्म संयोगं कृत्वा विनश्यतीत्यदोषः । अथवांश्वन्तरविभागोत्पत्तिसमकालं तस्मिन्नेव तन्तौ कर्मोत्पद्यते १ । ततोंऽश्वन्तरविभागात्तन्त्वारम्भकसंयोगविनाशः तन्तुकर्मणा च तन्त्वन्तराद्विभागः क्रियत इत्येकः कालः २ । ततः संयोगविनाशात्तन्तुविनाशः ३ । तद्विनाशाच्चदाश्रितयोर्विभागकर्मणोर्युगपद्विनाश ४ इति । तन्तुवीरणयोर्वा संयोगे सति द्रव्यानुत्पत्तौ पूर्वोक्तेन विधानेनाश्रयविनाशसंयोगाभ्यां तन्तुवीरणविभागविनाश इति ॥

---

१ द्व्यणुकं चाणुश्च तौ तयोः.

२ कर्मणः अंश्वन्तरकर्मणः.

३ तन्तुकर्मणा विनश्यदवस्थतन्त्वोर्विभागो यथा जनितस्तथा तदंशोरपि जननीयस्तस्याप्यारम्भकसंयोगविरोधित्वात् । एवं च तन्त्वन्तरविभागादुत्तरस्तन्त्वाकाशविभागस्तेनोत्तरसंयोगस्ततस्तन्तुकर्मनाश एवमंश्वन्तरकर्मणोऽपि.

४ तन्त्वंश्वन्तरविभागाज्जायमानस्तन्त्वाकाशविभागो न दृष्टान्तवत्कश्चिद्विभागभेद इति स्थित एव दोषः इत्यरुचेराश्रयनाशादेव विभागकर्मणोर्युगपन्नाशमाह अथवेत्यादिना.

५ [illegible] नुत्पत्तौ [illegible] । ततो- [illegible] ागात्त- न्त्वारम्भकसंयोगनाशस्तन्तुवीरणविभागाच्च तन्तुवीरणसंयोगनाशः ३ ततस्तन्त्वारम्भकसंयोगनाशात्तन्तुनाशस्तन्तुवीरणसंयोगनाशाच्च वीरणस्योत्तरसंयोगः ४ ताभ्यामाश्रयनाशोत्तरसंयोगाभ्यां तन्तुवीरणविभागविनाशाविति. इदं च वीरणकर्मनाशस्याप्युपलक्षकम्.

६ इति विभागः पा. २ पृ.

परत्वमपरत्वं च परापराभिधानप्रत्ययनिमित्तम् । तत्द्विविधं दिक्कृतं कालकृतं च । दिक्कृतं दिग्विशेषप्रत्यायकम् । कालकृतं तु वयोभेदप्रत्यायकम् । तत्र दिक्कृतस्योत्पत्तिरभिधीयते । कथम् । एकस्यां दिश्यवस्थितयोः पिण्डयोः संयुक्तसंयोगे बह्वल्पभावे सति एकस्य द्रष्टुः सन्निकृष्टमवधिं कृत्वा एतस्माद्विप्रकृष्टोऽयमिति परस्याधारे विप्रकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्य परेण दिक्प्रदेशेन संयोगात्परत्वस्योत्पत्तिः । विप्रकृष्टं चावधिं कृत्वा तस्मिन्सन्निकृष्टबुद्धिरुत्पद्यते । ततस्तामपेक्ष्यापरेण दिक्प्रदेशेन संयोगादपरत्वस्योत्पत्तिः । कालकृतयोरपि कथम् । वर्त्तमानकालयोरनियतदिग्देशयोर्युवस्थविरयो रूढश्मश्रुकार्कश्यवलीपलितादिसान्निध्ये सत्येकस्य द्रष्टुर्युवानमवधिं कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते । तामपेक्ष्य परेण कालप्रदेशेन संयोगात्परत्वस्योत्पत्तिः । स्थविरं चावधिं कृत्वा यूनि सन्निकृष्टा बुद्धिरुत्पद्यते । तामपेक्ष्यापरेण कालप्रदेशेन संयोगात्परत्वस्योत्पत्तिरिति । विनाशस्त्वपेक्षाबुद्धिसंयोगद्रव्यनाशात् । अपेक्षाबुद्धिनाशात्[6] ता-

---

१ सन्निकृष्टं पिण्डम्.

२ तत्र पिण्डः समवायिकारणं दिक्पिण्डसंयोगोऽसमवायिकारणमपेक्षाबुद्धिर्निमित्तकारणम्.

३ अवधिं कृत्वा एतस्मात्सन्निकृष्टोऽयमित्यपरत्वाधारे बुद्धिरुत्पद्यते पा. २ पु.

४ उत्पत्तिरभिधीयते । इति प्रकृतम्.

५ तदा ताम्. पा. २ पु.

६ अयमेव हि स्पष्टार्थं सप्तधा क्रमशः प्रदर्श्यते अपेक्षाबुद्धिनाशादित्यादिना तद्यथा अपेक्षाबुद्धिनाशात् १ असमवायिकारणसंयोगनाशात् २ समवायिकारणद्रव्यनाशात् ३ निमित्तसमवायिकारणयोर्विनाशात् ४ समवाय्यसमवायिकारणयोर्विनाशात् ५ निमित्तासमवायिकारणयोर्नाशात् ६ निमित्तसमवाय्यसमवायिकारणनाशेभ्यः ७ इति दैशिकयोः सप्तधा नाशः । कालिकयोस्तु असमवायिकारणनाशजनाशाभावात् । समवायिकारणनाशात् १ अपेक्षाबुद्धिनाशात् २ द्वाभ्यांचे ३ ति त्रयः पक्षा इति शंकरमिश्राः । मम तु भाष्ये विशेषानभिधानात्सम्भवाच्चोभयोरेव सप्त पक्षा भाष्यसम्मता इति । उत्पादस्तु द्वयोर्युगपदेवान्यथाऽन्योन्याश्रयः स्यादिति मिश्राः ॥

द्यत् । उत्पन्ने परत्वे । यस्मिन्काले सामान्यबुद्धि[1]रुत्पन्ना भवति । ततो-ऽपेक्षाबुद्धे[2]र्विनश्यत्ता सामान्यज्ञानतत्सम्बन्धेभ्यः परत्वगुणबुद्धेरुत्पद्य-मानतेत्येकः कालः । ततो[3]ऽपेक्षाबुद्धेर्विनाशः गुणबुद्धेश्चोत्पत्तिः । ततो-ऽपेक्षाबुद्धिविनाशाद्गुणस्य विनश्यत्ता गुणज्ञानतत्सम्बन्धेभ्यो द्रव्यबुद्धे-रुत्पद्यमानतेत्येकः कालः । ततो द्रव्य[4]बुद्धेरुत्पत्तिर्गुणस्य च विनाशः ४ । संयोगविनाशादपि २ । कथम् । अपेक्षाबुद्धिसमकालमेव पर-त्वाधारे पिण्डे कर्मोत्पद्यते १ । तेन कर्मणा द्विक्पिण्डविभागः क्रि-यते अपेक्षाबुद्धितः परत्वोत्पत्तिरित्येकः कालः २ । ततः सामान्यबु-द्धेरुत्पत्तिः दिक्पिण्डसंयोगविनाशः ३ । ततो यस्मिन्नेव काले गुण-बुद्धिरुत्पद्यते तस्मिन्नेव काले दिक्पिण्डसंयोगविनाशाद्गुणस्य विनाशः ४ । द्रव्यविनाशादपि ॥ ३ ॥ कथम् । परत्वाधारावयवे कर्मो-त्पत्तं १ । यस्मिन्नेव कालेऽवयवाद्विभागं करोति तस्मिन्नेव कालेऽपे-क्षाबुद्धिरुत्पद्यते २ । ततो विभागाद् यस्मिन्नेव काले संयोगविनाशस्त-स्मिन्नेव काले परत्वमुत्पद्यते ३ । ततः संयोगविनाशाद्द्रव्यविनाशः सामान्यबुद्धेश्चोत्पत्तिः ४ । तद्विनाशाच्च तदाश्रितस्य गुणस्य वि-नाशः ५ । द्रव्यापेक्षाबुद्ध्योर्युगपद्विनाशादपि ४ । कथम् । यदा-परत्वाधारावयवे कर्मोत्पद्यते तदेवापेक्षाबुद्धिरुत्पद्यते १ । कर्मणा चा[7]वयवाद्विभागः क्रियते परत्वस्योत्पत्तिरित्येकः कालः २ । ततो यस्मिन्नेव काले विभागात्संयोगनाशस्तस्मिन्नेव काले सामान्यबुद्धिरु-त्पद्यते ३ । तदनन्तरं संयोगनाशात्द्रव्यनाशः सामान्यबुद्धेश्चापेक्षाबु-

---

१ सामान्यबुद्धिः परत्वसामान्यज्ञानम्.

२ ततः सामान्यबुद्धेरित्यर्थः.

३ ततः अपरस्मिन्काले द्वितीयक्षणे.

४ ततः तस्याः कारणभूताया अपेक्षाबुद्धेरित्यर्थः.

५ ततोऽपरस्मिन्काले तृतीयक्षणे.

६ द्रव्यविनाशात्. पा. २ पु. तद्विनाशाच्चेति पाठेऽपि द्रव्यविनाशादित्येवार्थः.

७ अवयवान्तरात्. २ पु.

द्धिविनाश इत्येकः कालः ४ । ततो द्रव्यापेक्षाबुद्ध्योर्युगपद्विनाशात्परत्वस्य विनाशः ५ । द्रव्यसंयोगविनाशा ६ दपि । कथम् । यदा द्रव्यावयवे कर्मोत्पन्न १ मन्यवयवान्तराद्विभाग करोति तस्मिन्नेव काले पिण्डकर्मापेक्षाबुद्ध्योर्युगपदुत्पत्तिः २ ततो यस्मिन्नेव काले परत्वस्योत्पत्तिस्तस्मिन्नेव काले विभागात् द्रव्यारम्भकसंयोगविनाशः पिण्डकर्मणा च द्विपिण्डविभागः क्रियते ३ । ततो यस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते तत्समकालं संयोगविनाशात्पिण्डविनाशः । विभागाच्च द्विपिण्डसंयोगविनाशः ४ । ततो गुणबुद्धिसमकालं पिण्डसंयोगविनाशात्परत्वस्य विनाश इति ५ । संयोगापेक्षाबुद्ध्योर्युगपद्विनाशादपि ६ ॥ कथम् । यदा परत्वमुत्पद्यते तदैव परत्वाधारे कर्म १ । ततो यस्मिन्नेव काले परत्वसामान्यबुद्धिरुत्पद्यते तस्मिन्नेव काले पिण्डकर्मणा द्विपिण्डविभागः क्रियते २ । ततः सामान्यबुद्धितोऽपेक्षाबुद्धिविनाशः विभागाच्च द्विपिण्डसंयोगनाश इत्येकः कालः ३ । ततश्च संयोगापेक्षाबुद्धिविनाशात्परत्वस्य विनाशः ४ । त्रयाणां समवाय्यसमवायिनिमित्तानां युगपद्विनाशादपि ७ ॥ कथम् । यदापेक्षाबुद्धिरुत्पद्यते तदैव पिण्डावयवे कर्म १ । ततो यस्मिन्नेव कालेऽवयवान्तराद्विभागः क्रियते परत्वस्योत्पत्तिस्तस्मिन्नेव काले पिण्डकर्म २ । ततो विभागात्पिडारम्भकसंयोगविनाशः पिण्डकर्मणा ।

१ विनाश इति पा. २ पु. एवमन्यत्रापि प्रकारसमाप्तौ सर्वत्र इति. द्रव्याधिकः पा. २ पु.

२ द्रव्यसंयोगनाशादपि द्रव्यं च संयोगश्च तौ. द्रव्यसंयोगौ तयोर्नाशादिति विग्रहः २ पु. द्विपिण्डसंयोगनाशद्रव्यविनाशादपि. पा.

३ परत्वाधारद्रव्यावयवे पा. २ पु.

४ सामान्यबुद्धि. परत्वसामान्यबुद्धिः.

५ संयोगविनाशात. द्रव्यारम्भकसंयोगविनाशात्.

६ पिण्डसंयोगयोर्विनाशात् इति व्यस्तः पा. २ पु.

७ निमित्तकारणानाम् २ पु.

८ पिण्डे कर्म पा. २ पु.

च दिक्पिण्डविभागः क्रियते सामान्यबुद्धेरुत्पत्तिरित्येकः कालः ३ । ततश्च संयोगविनाशात्पिण्डविनाशः । विभागाच्च दिक्पिण्डसंयोगविनाशः । सामान्यज्ञानादपेक्षाबुद्धेर्विनाशः ४ । इति । इत्येवं युगपत्त्रयाणां समवाय्यसमवायिनिमित्तानां विनाशात्परत्वस्य विनाश ५ इति ॥

बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः । सा चानेकप्रकाराऽनन्त्यात्प्रत्यर्थनियतत्वाच्च । तस्याः सत्यप्यनेकविधत्वे समासतो द्विविधा विद्या चाविद्या च । तत्राविद्या चतुर्विधा संशयविपर्ययानध्यवसायलक्षणा । संशयस्तावत् प्रसिद्धानेकविशेषयोः स्थाणुपुरुषयोः सादृश्यमात्रदर्शनादुभयविशेषानुस्मरणादधर्माच्च किंस्विदित्युभयावलम्बी विमर्शः संशयः स च द्विविधोऽन्तर्बहिश्च । अन्तस्तावत् आदेशिकस्य सम्यङ्मिथ्या चादिश्य पुनरादिशतस्त्रिषु कालेषु संशयो भवति किं सम्यङ् मिथ्या वेति । बहिरपि द्विविधः प्रत्यक्षविषये चाप्रत्यक्षविषये च । तत्राऽप्रत्यक्षविषये तावत्साधारणलिङ्गदर्शनादुभयविशेषानुस्मरणादधर्माच्च संशयो भवति । यथाऽटव्यां विषाणमात्रदर्शनाद् गौर्गवयो वेति । प्रत्यक्षविषयेऽपि स्थाणुपुरुषयोरूर्ध्वतामात्रदर्शनाद्वक्रकोटरादिविशेषानुपलब्धितः स्थाणुत्वादिसामान्यविशेषानभिव्यक्तावुभयविशेषानुस्मरणादुभयत आकृष्यमाणस्यात्मनः प्रत्ययो दोलायते किंनु खल्वयं स्थाणुः पुरुषो वेति । विपर्ययोऽपि प्रत्यक्षा-

१ एतत्सर्वं युगपत्. पा. २ पु.
२ समासतः संक्षेपतः द्वे विधे इति पा. साधुः.
३ उभयकोटिस्पृग् ज्ञानम्.
४ आदेशिकस्य मौहूर्तिकस्य.
५ आदिश्य चन्द्रोपरागादिसम्यगसम्यक् चादिश्य.
६ किंनु सम्यक्. पा. २ पु.
७ उभयविशेषानुस्मरणात्कोटिद्वयस्मरणात्.
८ स्थाणुत्वादिसामान्यमेव विशेषो व्यावर्त्तको धर्मस्तस्यानभिव्यक्तावित्यर्थः.
९ इति संशयः पा. २ पु.

नुमानविषय एव भवति । प्रत्यक्षविषये तावत्प्रसिद्धानेकविशेषयोः पित्तकफानिलोपहतेन्द्रियस्य संप्रत्ययथार्थलोचनादसंनिहितविषयविज्ञानजसंस्कारापेक्षादात्ममनसोः संयोगादधर्माच्चातस्मिंस्तदिति प्रत्ययो विपर्ययः । यथा गव्येवाश्व इति । असत्यपि प्रत्यक्षे प्रत्यक्षाभिमानो भवति । यथापगतघनपटलमचलजलनिधिसदृशमम्बरमञ्जनपुञ्जश्यामं शार्वरं तम इति अनुमानविषयेऽपि बाष्पादिभिर्धूमाभिमतैर्वन्ह्यनुमानं गवयविषाणदर्शनाच्च गौरिति त्रयीदर्शनविपरीतेषु शाक्यादिदर्शनेषु इदं श्रेय इति मिथ्याप्रत्ययो विपर्ययः । शरीरेन्द्रियमनःस्वात्माभिमानः । कृतकेषु नित्यदर्शनम् । कारणवैकल्ये कार्योत्पत्तिज्ञानम् । हितमुपदिशत्स्वहितमिति । अनध्यवसायोऽपि प्रत्यक्षानुमानविषये संजायते । तत्र प्रत्यक्षविषये तावत् प्रसिद्धार्थेष्वप्रसिद्धार्थेषु वा व्यासङ्गादर्थित्वाद्वा किमिदमित्यालोचनमात्रमनध्यवसायः । यथा वाहीकस्य पनसादिष्वनध्यवसायो भवति । तत्र हि सत्ता द्रव्यत्वपृथिवीत्ववृक्षत्वरूपवच्छाखाद्यपेक्षोऽध्यवसाय एव । पनसत्वमपि पनसेष्वनुवृत्तमाम्रादिभ्यो व्यावृत्तं प्रत्यक्षमेव । केवलं तूपदेशाभावात् विशेषसंज्ञाप्रतिपत्तिर्न भवति । अनुमानविषयेऽपि नारिकेलद्वीप-

---

१ प्रसिद्धाज्ञाता अनेके विशेषधर्मा ययोस्तौ तयोरित्यर्थः.

२ उपहतेन्द्रियस्यायथार्थलोचनात्. पा. २ पु.

३ असत्यपि प्रत्यक्षे प्रत्यक्षाभिमानः प्रत्यक्षविपर्ययोऽयम् पा. २ पु.

४ सद्भावपुरिदमम्बरमिति. पा. २ पु.

५ अञ्जनचूर्णपुञ्ज. पा. २ पु.

६ गवये विषाण पा. २ पु.

७ त्रयी वेदत्रयी.

८ हितमुपदिशत्स्वेवाहितमहितमुपदिशत्स्वेवहितमिति विपर्ययः पा. २ पु.

९ प्रसिद्धार्थेष्वप्रसिद्धार्थेषु च पा. २ पु. तत्र सामान्यविशेषभावेन प्रसिद्धाऽप्रसिद्धयोः समुच्चयो बोद्धव्यः

१० तुरगवाहीकस्य पा. २ पु. वाहीको जातिभेदः पनसो वृक्षविशेषः कण्टकी.

११ रूपवत्त्वादि शाखाद्यपेक्षयाऽध्यवसायः पा. २ पु.

१२ एतेन निरुक्तलक्षणेन च संशयान्यवच्छेदः.

वासिनः सास्नादिमात्रदर्शनात्को नु खल्वयं प्राणी स्यादित्यनध्यवसायो भवति । उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्येन्द्रियद्वारेणैव यदनुभवनं मानसं तत्स्वप्नज्ञानम् । कथम् यदा बुद्धिपूर्वकादात्मनः शरीरव्यापारादहनि खिन्नस्य प्राणिनो निशि विश्रामार्थमाहारपरिणामार्थं वाऽदृष्टकारितप्रयत्नापेक्षादात्मान्तःकरणसम्बन्धान्मनसि क्रियाप्रबन्धादन्तर्हृदये निरिन्द्रियात्मप्रदेशे निश्चलं मनस्तिष्ठति तदा प्रलीनमनस्क इत्याख्यायते । प्रलीने च तस्मिन्नुपरतेन्द्रियग्रामो भवति । तस्यामवस्थायां प्रबन्धेन प्राणापानसन्तानप्रवृत्तावात्ममनःसंयोगविशेषात्स्वापाख्यात्संस्काराच्चेन्द्रियद्वारेणैवासत्स्वपि विषयेषु प्रत्यक्षाकारं ज्ञानमुत्पद्यते । तत्तु त्रिविधम् संस्कारपाटवाद्धातुदोषाददृष्टाच्च । तत्र संस्कारपाटवात्तावत् कामी क्रुद्धो वा यदा यमर्थमादृतश्चिन्तयन्स्वपिति तदा सैव चिन्तासन्ततिः प्रत्यक्षाकारा संजायते । धातुदोषाद्वातप्रकृतिर्वातदूषितो वा आकाशगमनादीनि पश्यति । पित्तप्रकृतिः पित्तदूषितो वाऽग्निप्रवेशकनकपर्वतादीनि पश्यति । श्लेष्मप्रकृतिः श्लेष्मदूषितो वा सरित्समुद्रहिमप्रतरणादीनि पश्यति । अदृष्टात् यत्स्वयमनुभूतेष्वननुभूतेषु प्रसिद्धेष्वप्रसिद्धेषु च शुभावेदकं गजारोहणच्छत्रलाभादि तत्सर्वं संस्कारधर्माभ्यां भवति । विपरीतं तु तैलाभ्यञ्जनोष्ट्रारोहणा-

१ अनुमानविषयेऽव्युत्पन्नसङ्केतस्य नालिकेरद्वीपवासिनः पा. २ पु.

२ भवति । अनध्यवसायः. पा. पु.

३ इत्युच्यते. पा. २ पु.

४ प्रलीने तु पा. २ पु.

५ प्रबन्धेन प्रवाहेन

६ स्वप्नाख्यात् २ पु

७ तत्त्रिविधम्. २ पु

८ आदृत आदृतश्च आदरवान्

९ शुभावेदकं शुभसूचकम्.

१० विपरीतमशुभावेदकम्.

दिसंस्काराधर्माभ्यां भवति । अत्यन्ताप्रसिद्धेष्वदृष्टादेव[१] भवति । स्वप्नान्तिकं[२] यद्यप्युपरतेन्द्रियग्रामस्य भवति तथाप्यतीतज्ञानप्रबन्धस्य प्रत्यवेक्षणात्स्मृतिरेवेति चतुर्विधा भवत्यविद्येति[३] ॥

विद्यापि चतुर्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा । तत्राक्षं प्रतीत्य[४] यदुत्पद्यते तत्प्रत्यक्षम्[५] । अक्षाणीन्द्रियाणि घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि । तद्धि द्रव्यादिपदार्थेषूत्पद्यते । द्रव्ये तावत्त्रिविधे[६] महत्यनेकद्रव्यवत्त्वरूपप्रकाशचतुष्टयसन्निकर्षा[७]द्धर्मादिसामग्र्ये[८] च सति स्वरूपालोचनमात्रं[९] सामान्यविशेषद्रव्यगुणकर्मविशेषणापेक्षादात्ममनःसन्निकर्षात्प्रत्यक्षमुत्पद्यते सद्द्रव्यं पृथिवी विषाणी शुक्ला गौर्गच्छतीति[१०] । रूपरसगन्धस्पर्शेष्वनेकद्रव्यसमवायात्स्वगतविशेषात्स्वाश्रयसन्निकर्षान्नियतेन्द्रियनिमित्तमुत्पद्यते ज्ञानम् । शब्दस्य त्रितयसन्निकर्षाच्छ्रोत्रसमवेतस्य[११] तेनैवोपलब्धिः । संख्यापरिमाणपृथक्त्व-

---

१ अदृष्टादेव नतु संस्कारात्.

२ स्वप्नान्तिकं स्वप्नस्यान्तेभव स्वप्नानुभवजसंस्कारजमिति यावत्.

३ इति अविद्या पा. २ पु.

४ प्रतिप्रेत्य.

५ तद्धि प्रत्यक्षम्.

६ त्रिविधे शरीरेन्द्रियविषयरूपे.

७ चतुष्टयसन्निकर्षात् सामान्यविशेषादीनां चतुर्णां विशेषणानां चतुर्भ्यः सन्निकर्षेभ्य इति यावद् विशिष्टप्रतीतिर्हि नागृहीतविशेषणा नवा विशेषणसम्बन्धमन्तरेण भवति.

८ विशिष्टज्ञानं च विशेष्यविशेषणेन्द्रियसन्निकर्षादुत्पद्यते इति सामान्यविशेषादीनां विशेषणतया तत्रापेक्षावश्यकी.

९ स्वरूपालोचनमात्रं प्रत्यक्षप्रमाणं सविकल्पकं सामान्यविशेषद्रव्यगुणकर्मविशेषणापेक्षादात्ममनः सन्निकर्षादुत्पद्यते पा. २ पु.

१० एतत्सर्वं चाक्षुषप्रत्यक्षाभिप्रायेण । अत्र हि सामान्यविशेषो द्रव्यत्वादिविशेषणम्. विषाण इति द्रव्य शुक्ल इति गुणः गच्छतीति कर्म.

११ द्रव्यसमवेतस्यैव गुणस्य भावात्. द्रव्यसमवायोऽपि कारणम् । तथाच द्रव्यसमवायः शब्दत्वादिसमवायः श्रोत्रेन्द्रियसमवाय इति त्रयः सन्निकर्षाः. त्रयसन्निकर्षात् पा. २ पु.

संयोगविभागपरत्वापरत्वस्नेहवद्द्रव्यत्वकर्मणां प्रत्यक्षद्रव्यसमवाया-च्चाश्रयद्रव्यवच्चक्षुःस्पर्शनाभ्यां ग्रहणम् । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नानां द्वयोरात्ममनसोः संनिकर्षादुपलब्धिः । भावद्रव्यत्वगुणत्वकर्मत्वादीनामुपलभ्याधारसमवेतानां स्वाश्रयग्राहकैरिन्द्रियैर्ग्रहणमित्येतदस्मदादीनां प्रत्यक्षम् ।

अस्मद्विशिष्टानां तु योगिनां युक्तानां योगजधर्मानुगृहीतेन मनसा स्वात्मान्तराकाशदिक्कालवायुपरमाणुमनःसु तत्समवेतेषु गुणकर्मसामान्यविशेषेषु समवाये चावितथस्वरूपदर्शनमुत्पद्यते । वियुक्तानां पुनश्चतुष्टयसंनिकर्षाद्योगजधर्मानुग्रहणसामर्थ्यात् सूक्ष्मव्यवहितविप्रकृष्टेषु प्रत्यक्षमुत्पद्यते ज्ञानम् । तत्र द्रव्यगुणकर्मसामान्यविशेषेषु स्वरूपालोचनमात्रं प्रत्यक्षं प्रमाणं प्रमेया द्रव्यादयः पदार्थाः प्रमाता आत्मा प्रमितिर्द्रव्यादिविषयं ज्ञानम् ॥ सामान्यविशेषज्ञानोत्पत्ताव-विभक्तमालोचनमात्रं प्रत्यक्षं प्रमाणं न [10]तस्मिन्नन्यत्प्रमाणमस्ति अफ-

---

१ यथाऽऽश्रयद्रव्यस्य चक्षुषा त्वचा च ग्रहणं तद्वत्.

२ युक्ताःसमाहितान्तःकरणाःध्यानसापेक्षा ध्यानसहकारेण हि तेषां सर्वप्रत्यक्षं भवति.

३ स्वात्मान्तराकाशेति. स्वस्मिन्नात्मनि आत्मान्तरे परात्मनि आकाशादिषु त्रिषु वायौ परमाणुषु मनःसु चेत्यर्थः.

४ अवितथमव्यपदेश्यम्. पा २ पृ.

५ स्वरूपदर्शनम् सर्वधर्मादिभावपूर्वकमन्तर्बहिरादिसर्वदेशावच्छेदेन यथा. भू-तस्वरूपसाक्षात्कारः.

६ वियुक्तानामसमाहितान्तःकरणानां समाधिप्रभावाद्धिकरणधर्माणां ध्यानं वि-नापि सर्वसाक्षात्कर्तॄणाम्.

७ प्रत्यक्षम्. २ पृ.

८ स्वरूपालोचनमात्रं ननु द्रव्यत्वादिविशेषप्रकारकं प्रत्यक्षं प्रमाणं प्रत्यक्षप्रमा-करणम्.

९ द्रव्यादिविषयं स्वरूपालोचनमात्रोत्तरं जायमानं द्रव्यत्वादिविशेषप्रकारक-मित्यर्थः.

१० तस्मिन्प्रत्यक्षे.

लस्वरूपत्वात् । अथवा सर्वेषु पदार्थेषु चतुष्टयसन्निकर्षादवितथमव्यपदेश्यं यज्ज्ञानमुत्पद्यते तत्प्रत्यक्षं प्रमाणम् । प्रमेया द्रव्यादयः पदार्थाः प्रमाता आत्मा, प्रमितिर्गुणदोषमाध्यस्थ्यदर्शनमिति । लिङ्गदर्शनात्संजायमानं लैङ्गिकम् । लिङ्गं पुनः यत् अनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् । विपरीतमतो यत्स्यादेकेन द्वितयेन वा । विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत् । यदनुमेयेनार्थेन देशविशेषे कालविशेषे सहचरितमनुमेयधर्मान्विते चान्यत्र सर्वस्मिन्नेकदेशे वा प्रसिद्धम् । अनुमेयविपरीते च सर्वस्मिन्प्रमाणतोऽसदेव तदप्रसिद्धस्यार्थस्यानुमापकं लिङ्गं भवतीति । यत्तु यथोक्तात्त्रिरूपाल्लिङ्गादेकेन धर्मेण द्वाभ्यां वा विपरीतं तदनुमेयस्याधिगमे लिङ्गं न भवतीति । आह सूत्रकारः अप्रसिद्धोऽनपदेशोऽसंदिग्धश्चानपदेश इति । विधिस्तु यत्र धूमस्तत्राग्निरिति अग्न्यभावे धूमो न भवतीति । एवं प्रसिद्धसमयस्यासन्दिग्धधूमदर्शनात् साहचर्यस्यानुस्मरणादनन्तरमग्न्यध्यवसायो भवति तत्परं भवतीति । एवं देशकालाविनाभूतमितरस्य लिङ्गम् । शास्त्रे कार्यादिग्रहणं निदर्शनार्थं कृतं नावधारणार्थम् कस्माद्व्यतिरेके लिङ्गदर्शनात् ।

---

१ अफलरूपत्वात्. प्रत्यक्षं प्रमाकरणत्वेन प्रमाणं भवत्फलं प्रमा भवतीत्यफलरूपे प्रमाणे । न प्रमाणान्तरमस्ति फले हि प्रमायां प्रमाणं तत्साधकत्वेन प्रवर्त्तते.

२ माध्यस्थ्येन गुणदोषदर्शनमित्यर्थः.

[illegible] साध्यवति चान्यत्र पक्षातिरिक्ते

[illegible]

५ ३।१।१५। सू०

६ विधिः प्रयोगो निदर्शनं वा.

७ प्रसिद्धसमयस्य गृहीतव्याप्तेरनुमातुः.

८ पर फलमनुमितिरूपम्.

९ अस्येद् कार्यं कारणसंयोगि विरोधिसमवायि चेति लैंगिकम्. ९।२।१।

१० व्यतिरेके कार्याद्यभावेऽपि व्यतिरेकदर्शनात्. २ पु. तत्र व्यभिचारदर्शनादित्यर्थः.

तद्यथा अध्वर्युराश्रावयन् व्यवहितस्य होतुर्लिङ्गम् । चन्द्रोदयः समुद्रवृद्धेः कुमुदविकाशस्य च शरदि जलप्रसादश्चागस्त्योदयस्येत्येवमादि तत्सर्वमस्येदमिति सम्बन्धमात्रवचनात्[1] सिद्धम् । तत्तु द्विविधं दृष्टं सामान्यतो दृष्टम् तत्र दृष्टं प्रसिद्धसाध्ययोरत्यन्तजात्यभेदेऽनुमानम् । यथा गव्येव सास्नामात्रमुपलभ्य देशान्तरे सास्नामात्रदर्शनाद्गवि प्रतिपत्तिर्भवति । प्रसिद्धसाध्ययोरत्यन्तजातिभेदे लिङ्गानुमेयधर्मसामान्यानुवृत्तितोऽनुमानं सामान्यतो दृष्टम् । यथा कर्षकवणिग्राजपुत्राणां प्रवृत्तेः साफल्यमुपलभ्य वर्णाश्रमिणामपि दृष्टं प्रयोजनमनुद्दिश्य प्रवर्तमानानां फलानुमानमिति । तत्र लिङ्गदर्शनं प्रमाणं प्रमितिरग्निज्ञानम् । अथवाऽग्निज्ञानमेव प्रमाणम् । प्रमितिरग्नौ[2] गुणदोषमाध्यस्थ्यदर्शनम् । तत्स्वनिश्चितार्थमनुमानम् शब्दादीनामप्यनुमानेऽन्तर्भावः समानविधित्वात् । यथा प्रसिद्धसमयस्य लिङ्गदर्शनप्रसिद्ध्यनुस्मरणाभ्यामतीन्द्रियेऽर्थे भवत्यनुमानम् । एवं शब्दादिभ्योऽपीति । श्रुतिस्मृतिलक्षणोऽप्याम्नायो वक्तृप्रामाण्यापेक्षोऽनुमानमेव । तद्वचनादाम्नायप्रामाण्य[3]मिति वचनाल्लिङ्गाच्चानित्यः बुद्धिपूर्वा वाक्यकृतिर्वेदे[4] बुद्धिपूर्वो[5] ददातिरित्युक्तत्वात् । प्रसिद्धाभिनयस्य चेष्टया[6] प्रतिपत्तिदर्शनात्तदप्यनुमानमेव । आप्तेनाप्रसिद्धगवयस्य गवा गवयत्वप्रतिपादनादुपमानमाप्तवचनमेव । दर्शनार्थापत्तिर्विरोध्येव[7] श्रुतार्थापत्तिरपि[8] । शब्दश्रवणादनुमितानुमानम् । सम्भवोऽप्यविनाभावित्वाद-

१ वचनात्सूत्रकारेण कथनात्.
२ प्रमाणमित्येतस्य.
३ सू० १।१।३।१०।२।९।
४ ६।१।१।
५ ६।१।३।
६ चेष्टया: पा. २ पु प्रसिद्धाभिनयस्य पुरुषस्य.
७ विरोध्यनुमानमेव २ पु.
८ श्रुतार्थापत्तिरपि विरोधिनः श्रवणात्. पा. २ पु.

नुमानमेव । अभावोऽप्यनुमानमेव यथोत्पन्नं कार्यं कारणसद्भावे लिङ्गम् एवमनुत्पन्नं कार्यं कारणसद्भावे लिङ्गम् । ऐतिह्यमवितथमाप्तोपदेश एवेति । पञ्चावयवेन वाक्येन (स्वनिश्चितार्थप्रतिपादनं परार्थानुमानम् । पञ्चावयवेनैव ) वाक्येन संशयितवद्विपर्यस्ताऽव्युत्पन्नयोः[1] स्वनिश्चितार्थप्रतिपादनं परार्थानुमानं विज्ञेयम् । अवयवाः पुनः प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायाः । तत्रानुमेयोद्देशोऽविरोधी प्रतिज्ञा प्रतिपादयिषितधर्मविशिष्टस्य धर्मिणोऽपदेशविषयापादानार्थमुपदेशमात्रं प्रतिज्ञा, यथाद्रव्यं वायुरिति । अविरोधिग्रहणात्प्रत्यक्षानुमानागमस्वशास्त्रस्ववचनविरोधिनो निरस्ता भवन्ति । यथाऽनुष्णोऽग्निरिति प्रत्यक्षविरोधी । घनमम्बरमित्यनुमानविरोधी । ब्राह्मणेन सुरापेयेत्यागमविरोधी । वैशेषिकस्य प्रागुत्पत्तेः सत्कार्यमिति वदतः स्वशास्त्रविरोधी । न शब्दोऽर्थप्रत्यायक इति स्ववचनविरोधी । लिङ्गवचनमपदेशः[2] यदनुमेयेन सहचरितं तत्समानजातीये च सर्वत्रासर्वत्र सामान्येन प्रसिद्धं तद्विपरीते च सर्वस्मिन्नसदेव तल्लिङ्गमुक्तं तस्य वचनमपदेशः । यथा क्रियावत्त्वाद्गुणवत्त्वाद्वेति । तथा च यदनुमेयेऽस्ति तत्समानजातीये प्रसिद्धं सर्वस्मिन् गुणवत्त्वम् असर्वस्मिन् क्रियावत्त्वम् । उभयमप्येतद्द्रव्ये नास्त्येव तस्य वचनमपदेश इति सिद्धम् । एतेनाप्रसिद्धस्य विरुद्धसन्दिग्धानध्यवसितवचनानामनपदेशत्वमुक्तं भवति । तत्रासिद्धश्चतुर्विधः । उभयासिद्धोऽन्यतरासिद्धस्तद्भावासिद्धोऽनुमेयासिद्धश्चेति[3] ॥

तत्रोभयासिद्ध उभयोर्वादिप्रतिवादिनोरसिद्धः । यथा अनित्यः शब्दः सावयवत्वात् । अन्यतरासिद्धः कार्यत्वादनित्य[4] इति । तद्भा–

---

१ संशयितविपरीताव्युत्पन्नानाम्. पा. २ पु.
२ अपदेशो हेतुः.
३ स्वसद्भावासिद्धः पा. २ पु.
४ अनित्यः शब्दः. २ पु.

चासिद्धो यथा धूमाभावेऽप्यग्निगतौ । अनुमेयसिद्धो यथा पार्थिवं तमः कृष्णरूपवत्त्वादिति । यथा हेतुरन्यतरासिद्ध उभयासिद्धो वा भवत्येवमाश्रयासिद्धिरप्युभयथा । यो ह्यनुमेयेऽविद्यमानोऽपि तत्समानजातीये सर्वस्मिन्नास्ति तद्विपरीते चास्ति स विपरीतसाधनाद्विरुद्धः । यथा यस्माद्विषाणी तस्मादश्व इति । यस्तु सन्ननुमेये तत्समानासमानजातीययोः साधारणः स सन्नेव सन्देहजनकत्वात्सन्दिग्धः यथा यस्माद्विषाणी तस्माद्गौरिति ॥ एकस्मिंश्च द्वयोर्हेत्वोर्यथोक्तलक्षणयोर्विरुद्धयोः सन्निपाते संशयदर्शनादयमन्यः सन्दिग्ध इति केचित् । यथा मूर्तत्वामूर्तत्वं प्रति मनसः क्रियावत्त्वास्पर्शवत्त्वयोरिति । नन्वयमसाधारण एवाचाक्षुषप्रत्यक्षवत् संहतयोरन्यतरपक्षासम्भवात् । ततश्चानध्यवसित इति वक्ष्यामः । ननु च शास्त्रे तत्रतत्रोभयथा दर्शनं संशयकारणमपदिश्यते इति न संशयो विषयद्वैतदर्शनात् । संशयोत्पत्तौ विषयद्वैतदर्शनं कारणं तुल्यबलत्वे च तयोः परस्परविरोधान्निर्णयानुत्पादकत्वं स्यान्न तु संशयहेतुत्वं नच तयोस्तुल्यबलत्वमस्ति अन्यतरस्यानुमेयोद्देशस्यागमबाधितत्वात् अयं तु विरुद्धप्रभेद एव । यश्चानुमेये विद्यमानस्तत्समानासमानजातीययोरसन्नेव सोऽन्यतरासिद्धोऽनध्यवसायहेतुत्वादनध्यवसितः यथा सत्कार्यमुत्पत्तेरिति । अयमसिद्धोऽनपदेश इति वचनादविरुद्धः । ननु चायं संशयहेतुरभिहितः । शास्त्रे तुल्यजातीयेष्वर्थान्तरेषु च विशेषस्य उभ-

---

१ स्वसद्भावासिद्धः. २ पु.
२ धूमाभावेऽप्यनुमाने. २ पु.
३ साध्यवत्तया पक्षोऽत्रानुमेयः
४ मूर्तत्वामूर्तत्वे. २ पु.
५ स्पर्शवत्त्वयोः. २ पु.
६ अचाक्षुषत्वप्रत्यक्षवत्. पा. २ पु.
७ अन्यतरत्रासिद्धो २ पु.
८ अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः ३।१।१५।

यथा द्रष्टत्वादिति । न अन्यार्थत्वात् । शब्दे विशेषदर्शनात्संशया-नुपपत्तिरित्युक्ते नायं द्रव्यादीनामन्यतमस्य विशेषः श्रावणत्वं किन्तु सामान्यमेव सम्पद्यते तस्मात्तुल्यजातीयेष्वर्थान्तरभूतेषु द्रव्यादिभेदानामेकैकशो विशेषस्योभयथा दृष्टत्वादित्युक्तम् । न संशयकारणम् । अन्यथा षट्स्वपि पदार्थेषु संशयप्रसंगात् । तस्मात्सामान्यप्रत्ययादेव संशय इति ॥

द्विविधं निदर्शनम् साधर्म्येण वैधर्म्येण च । तत्रानुमेयेन सामान्येन लिङ्गसामान्यस्यानुविधानदर्शनं साधर्म्यनिदर्शनम् । तद्यथा यत्क्रियावद्द्रव्यं दृष्टं यथा शर इति । अनुमेयविपर्ययेण लिङ्गस्याभावदर्शनं वैधर्म्यनिदर्शनम् यत्द्रव्यं तत्क्रियावन्न भवति यथा सत्तेति । अनेन निदर्शनाभासा निरस्ता भवन्ति । तद्यथा नित्यः शब्दः अमूर्त्तत्वात् यदमूर्त्तं तन्नित्यं दृष्टम् यथा परमाणुः यथा कर्म यथा स्थाली यथा तमः अम्बरवत् । यत् द्रव्यं तत्क्रियावद्दृष्टमिति च । लिङ्गानुमेयोभयाश्रयासिद्ध्यननुगतविपरीतानुगताः साधर्म्यनिदर्शनाभासाः यदनित्यं तन्मूर्त्तं दृष्टं यथा परमाणुः यथाकर्म यथाकाशं यथातमः घटवत् यन्निष्क्रियं तदद्रव्यं दृष्टमिति च । एवं लिंगानुमेयोभयाव्यावृत्ताश्रयासिद्धाव्यावृत्तविपरीतव्यावृत्तावैधर्म्यनिदर्शनाभासा इति । निदर्शनेऽनुमेयसामान्येन सह दृष्टस्य लिंगसामान्यस्यानुमेयेन्वानयनमनुसन्धानम् । अनुमेयधर्ममात्रत्वेनाभिहितं लिंगसामान्यमनुपलब्धशक्तिकं निदर्शने । साध्यसामान्येन सह दृष्टमनुमेये येन वचनेनानुसंधीयते तदनुसन्धानम् । तथा चायं वायुः क्रियावानिति अनुमेयाभावे तस्यासत्त्व मुपलभ्य न च तथा वायुर्निष्क्रिय इति । अनुमेयत्वेनोद्दिष्टेऽनिश्चिते परेषां निश्चयापादनार्थं पुनः प्रतिज्ञावचनं प्रत्याम्नायः । प्रतिपाद्य-

१ सू. २।२।२२।
२ यथा तमः २ पु.
३ यथा घटः २ पु.
४ यन्निष्क्रियं न तद्द्रव्यम्. २ पु.

स्वेनोद्दिष्टेऽनिश्चिते च परेषां हेत्वादिभिरवयवैराहितशक्तीनां परिसमाप्तेन वाक्येन निश्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः । तस्मात् क्रमशमेवेति न ह्येतस्मिन्नसति पूर्वेषामेवावयवानां समस्तानां व्यस्तानां वा तदर्थवाचकत्वमस्तीति गम्यमानार्थत्वादिति चेत नातिप्रसंगात् । प्रतिज्ञानन्तरं हेतुमात्राभिधानं कर्तव्यं विदुषामन्वयव्यतिरेकाभ्यामर्थावगतेर्भविष्यतीति । तस्मादत्रैवार्थपरिसमाप्तिः । कथम् । अनित्यः शब्द इत्यनेनानिश्चितानित्यत्वमात्रविशिष्टः शब्दः कथ्यते । प्रयत्नानन्तरीयकत्वादित्यनेन साधनधर्ममात्रमभिधीयते । इह यत्प्रयत्नानन्तरीयकं दृष्टं तदनित्यं यथा घट इत्यनेन साध्यसामान्येन साधनसामान्यस्यानुगममात्रमुच्यते । नित्यमप्रयत्नानन्तरीयकं दृष्टम् । यथाकाशमित्यनेन साध्याभावे साधनस्यासत्त्वं प्रदर्श्यते । तथाच प्रयत्नानन्तरीयकः शब्द इत्यन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यस्य साधनसामान्यस्य शब्देऽनुसन्धानं गम्यते । तस्मादनित्यः शब्द इत्यनेनानित्य एव शब्द इति प्रतिपिपादयिषितार्थपरिसमाप्तिर्गम्यते । तस्मात्पञ्चावयवेनैव वाक्येन परेषां स्वनिश्चितार्थप्रतिपादनं क्रियत इति परार्थमनुमानं सिद्धम् । विशेषदर्शनजमवधारणज्ञानं संशयविरोधी निर्णयः । [2] एतदेव प्रत्यक्षमनुमानं च[3] । यद्विशेषदर्शनात्संशयविरोध्युत्पद्यते स निर्णयः । यथा स्थाणुपुरुषयोरूर्ध्वतामात्रसादृश्यालोचनाद्विशेषेषु [illegible] पुरुषो वेति संशयोत्पत्तौ [illegible] एवायमित्यवधारणज्ञानं प्रत्यक्षनिर्णयः । विषाणमात्रदर्शनाद्गौर्गवयो वेति संशयोत्पत्तौ सास्नामात्रदर्शनात् गौरेवायमित्यवधारणमनुमाननिर्णयः । लिङ्गदर्शनेच्छानुस्मरणाद्यपेक्षात्ममनसोः संयोगविशेषात्पट्वभ्यासादरप्रत्ययजनिताच्च संस्काराद्दृष्टश्रुतानुभूतेष्वर्थेषु विशेषानुव्यवसायेच्छा-

---

१ तथाहि. पा. २.पु.

२ अन्वयव्यतिरेकानुस्मरणादर्थावगतिः पा. २ पु.

३ अनुमानं वा. पा. २ पु.

नुस्मरणद्वेषहेतुस्तदतीतविषयास्मृतिरिति । आम्नायविधातॄणामृषीणामतीतानागतवर्त्तमानेष्वर्थेष्वतीन्द्रियेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसोः संयोगविशेषाद्धर्मविशेषाच्च यत्प्रातिभं ज्ञान यथास्मनिवेदनमुत्पद्यते तदार्षमित्याचक्षते । तत्तु प्रस्तावेन देवर्षीणां कदाचिदेव लौकिकानाम् । यथा कन्यका ब्रवीति श्वो मे भ्राताऽऽगन्तेति । हृदयं मे कथयतीति । सिद्धदर्शनं न ज्ञानान्तरं । कथम् । यत्सूक्ष्मव्यवहितविप्रकृष्टेष्वर्थेषु सिद्धानां द्रष्टॄणां द्दश्यानामञ्जनपादलेपगुटिकादिसिद्धीनां दर्शनं तत्प्रत्यक्षमेव । अथ दिव्यान्तरिक्षभौमानां प्रहनक्षत्रसंचारादिनिमित्तमुपलभ्यप्राणिनां धर्माधर्मविपाकदर्शनमिष्टं तदनुमानमेव । अथ लिङ्गानपेक्षं धर्मादिषु दर्शनमिष्टं तदार्षप्रत्यक्षयोरन्यतरस्मिन्नन्तर्भूतमित्येवं बुद्धिः ॥

अनुग्रहलक्षण सुखम् । स्रगाद्यभिप्रेतविषयसान्निध्ये सतीष्टोपलब्धीन्द्रियार्थसन्निकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगादनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत्सुखम् । प्रतीतेषु विषयेषु स्मृतिजमनागतेषु सङ्कल्पजामिति । यत्तु विदुषामसत्सु विषयानुस्मरणसंकल्पेष्वाविर्भवाति तद्विद्याशमसन्तोषधर्मविशेषनिमित्तमिति ।

उपघातलक्षणं दुःखम । विषाद्यनभिप्रेतविषयसान्निध्ये सति अनिष्टोपलब्धीन्द्रियार्धसन्निकर्षादधर्मापेक्षादात्ममनसोः संयोगादमर्षोपघात-

---

१ द्वेषहेतुः द्वेषान्ता हेतवो यस्य इति विग्रहः । न चेतत्स्मृतिहेतूनां परिसंख्यानमपि तु निदर्शनमात्र । तेन न्यायोक्तानां प्रणिधानादीनां संग्रहः.

२ यथात्मवेदकम् पा. २ पु.

३ बाहुल्येन. २ पु

४ तदप्यनुमानमेव. २ पु.

५ तदप्यार्षप्रत्यक्षयोः. २ पु.

६ अनुग्रहः आनुकूल्यं अभिष्वङ्गो रागः.

७ सुखमित्यधिकः पाठः. २ पु.

८ उपघातः पीडा.

दैन्यनिमित्तमुत्पद्यते तत् दुःखम् । अतीतेषु सर्प[1]व्याघ्रादिषु स्मृतिजमनागतेषु संकल्पजमिति[2] । स्वार्थं परार्थं वा प्राप्तप्रार्थनमिच्छा । सा चात्ममनसोः संयोगात्सुखाद्यपेक्षाद्वा उत्पद्यते प्रयत्नस्मृतिधर्माधर्महेतुः । कामोऽभिलाषो रागः संकल्पः कारुण्यं वैराग्यमुपधा भाव इत्येवमादय इच्छा[3]भेदाः । मैथुनेच्छा कामः । अभ्यवहा[4]रेच्छाऽभिलाषः । पुनःपुनर्विषयानुरञ्जनेच्छा रागः । अनासन्नक्रियेच्छा संकल्पः । स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा कारुण्यम् । दोषदर्शनाद्विषयपरित्यागेच्छा वैराग्यम् । परवञ्चनेच्छा उपधा । अन्तर्निगूढेच्छा भावः । चिकीर्षा जिहीर्षेत्यादिक्रियाभेदादिच्छाभेदा भ[6]वन्ति ॥

प्रज्वलनात्मको द्वेषः । यस्मिन्सति प्रज्वलितमिवात्मानं मन्यते स द्वेषः । स चात्ममनसोः संयोगाद्दुःखापेक्षात्स्मृत्यपेक्षाद्वा उत्पद्यते, प्रयत्नस्मृतिधर्माधर्महेतुः । द्रोहः क्रोधो मन्युरक्षमाऽमर्ष इति द्वेषभेदाः । तत्राशुतरविनाशी क्रोधः । चिरानुबिद्धोऽपकारपर्यवसायी द्रोहः । नि[7]गूढोपकारासमर्थस्यापकारिणि द्वेषो मन्युः । परोपकारासहनमक्षमा । स्वगुणपरिभवोऽपकारासमर्थो द्वेषोऽमर्ष[8] इत्यार्षूह्यम् ॥

प्रयत्नः संरम्भ उत्साह इति पर्यायाः । स द्विविधो जीवनपूर्वक इच्छाद्वेषपूर्वकश्च । तत्र जीवनपूर्वकः सुप्तस्य प्राणापानसन्तानप्रेरकः प्रबोधकाले चान्तःकरणस्येन्द्रियान्तरप्राप्तिहेतुः । अस्य जीवनपूर्वकस्यात्ममनसोः संयोगाद्धर्माधर्मापेक्षादुत्पत्तिः । इतरस्तु हिताहितप्रा—

१ सर्पव्याघ्रचोरादिषु. २ पु.
२ दुःखम्. २ पु.
३ इच्छाभेदाः. २ पु.
४ अभ्यवहारो भोजनम्.
५ अनासन्नक्रियेच्छा संकल्पः. २ पु.
६ इच्छेत्यधिकः पाठः. २ पु.
७ निगूढ इति द्वेषविशेषणम्.
८ द्वेषः अ पा. २ पु.

सिपरिहारसमर्थस्य व्यायामस्य[1] हेतुः । शरीरधारक[2]आत्ममनसोः संयोगादिच्छापेक्षाद् द्वेषापेक्षाद्वोत्पद्यत[3] इति । गुरुत्वं जलभूम्योः पतनकारणमप्रत्यक्षं पतनकर्मानुमेयं[4] । संयोगप्रयत्नसंस्कारविरोधि । तस्य चाबादिपरमाणुरूपादिवन्नित्यानित्यत्वनिष्पत्तय इति ॥

द्रवत्वं स्यन्दनकर्मकारणम् । त्रिद्रव्यवृत्ति । तत्तु द्विविधं सांसिद्धिकं नैमित्तिकं चेति । सांसिद्धिकमपां विशेषगुणः । नैमित्तिकं पृथिवीतेजसोः सामान्यगुणः । सांसिद्धिकस्य गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः । संघातदर्शनात्सांसिद्धिकद्रवत्वमयुक्तमिति चेत् । न । दिव्येन तेजसा युक्तानामाप्यानां परमाणूनां परस्परसंयोगात्द्रव्यारम्भकः संघाताख्यस्तेन परमाणूनां द्रवत्वप्रतिबन्धात्[6] कार्ये[5] हिमकरकादौ द्रवत्वानुत्पत्तिः । नैमित्तिकं पृथिवीतेजसोरग्निसंयोगजम् । कथम् । सर्पिर्जतुमधूच्छिष्टाकरजादिकारणेष्व[7]ग्निसंयोगाद्वेगापेक्षात्कर्मोत्पत्तौ[8] तज्जेभ्यो विभागेभ्यो द्रव्यारम्भकसंयोगविनाशात्कार्यद्रव्यनिवृत्तौ, अन्यस्मादग्निसंयोगादौष्ण्यापेक्षात्स्वतन्त्रेषु परमाणुषु द्रवत्वमुत्पद्यते । ततस्तेषु भोगिनामदृष्टापेक्षादात्माणुसंयोगात्कर्मोत्पत्तौ तज्जेभ्यः संयोगेभ्यो द्व्यणुकादिप्रक्रमेण कार्यद्रव्यमुत्पद्यते तस्मिंश्च रूपोत्पत्ति[9]समकालं कारणगुणप्रक्रमेण द्रवत्वमुत्पद्यते[10] ॥ स्नेहोऽपां विशेषगुणः संग्रह[11]मृजादिहेतुः । अस्यापि गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः[12] ॥

---

१ व्यापारस्य. पु.
२ शरीरस्य विधारकः. २ पु.
३ प्रयत्नः. अ. पा. २ पु.
४ इति गुरुत्वम्. पा. २ पु.
५ करकादाविति शेषः.
६ संघाताख्यः, अनेन परमाणुद्रवत्वं प्रतिबद्धं तत्प्रतिबन्धात्. २ पु.
७ सर्पिरादिकारणेषु. २ पु.
८ संयोगादौष्ण्यापेक्षात्कर्मोत्पत्तौ कर्मजेभ्यः. २ पु.
९ रूपाद्युत्पत्ति. २ पु.
१० द्रवत्वम्. २ पु.
११ संग्रहमृजादिहेतुः संग्रहः पिण्डीभावः मृजाशुद्धिः
१२ इति स्नेहः. २ पु.

संस्कारस्त्रिविधः, वेगो भावना स्थितिस्थापकश्चेति । तत्र वेगो मूर्तिमत्सु पञ्चसु द्रव्येषु निमित्तविशेषापेक्षात्कर्मणो जायते । नियतदिक्क्रियाप्रबन्धहेतुः । स्पर्शवद्द्रव्यसंयोगविरोधी[1] । क्वचित्कारणगुणपूर्वप्रक्रमेणोत्पद्यत इति । भावनासंज्ञकस्त्वात्मगुणः । दृष्टश्रुतानुभूतेष्वर्थेषु स्मृतिप्रत्यभिज्ञानहेतुः । ज्ञानमददुःखादिविरोधी । पटुभ्यासादरप्रत्ययजः । पटुप्रत्ययापेक्षादात्ममनसोः संयोगविशेषादाश्चर्येऽर्थे पटुः संस्कारो जायते । यथा दाक्षिणात्यस्योष्ट्रदर्शनात् । विद्याशिल्पव्यायामादिष्वभ्यस्यमानेषु तस्मिन्नर्थे पूर्वपूर्वसंस्कारमपेक्षमाणादुत्तरोत्तरस्मात्प्रत्ययादात्ममनसोः संयोगात्संस्कारातिशयो जायते । प्रयत्नेन चक्षुषि मनः स्थापयित्वाऽपूर्वमर्थं दिदृक्षमाणस्य विद्युत्सम्पातदर्शनवदादरप्रत्ययस्तमपेक्षमाणादात्ममनसोः संयोगात्संस्कारातिशयो जायते । यथा देवहृदे सौवर्णराजतपद्मदर्शनादिति । स्थितिस्थापकस्तु स्पर्शवत् द्रव्येषु वर्तमानो घनावयवसन्निवेशविशिष्टेषु कालान्तरावस्थायिषु स्वाश्रयमन्यथाकृतं यथावस्थितं स्थापयति । स्थावरजंगमेषु विकारेषु धनुः शाखादन्तशृङ्गादिषु सूत्रवस्त्रादिषु भुग्नसम्वर्तितेषु तस्य कार्यं लक्ष्यते । नित्यानित्यत्वनिष्पत्तयोऽस्य गुरुत्ववत् द्रष्टव्याः[4] ॥ धर्मः पुरुषविशेषगुणः । कर्तुः प्रियहितमोक्षहेतुः । अतीन्द्रियोऽन्त्यसुखसम्विद्विरोधी पुरुषान्तःकरणसंयोगजः विशुद्धा[6]भिसन्धिजो वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः । अस्य तु साधनानि श्रुतिस्मृतिविहितानि वर्णाश्रमिणां सामान्यविशेषभावेनावस्थितानि द्रव्यगुणकर्माणि । तत्र सामान्यानि धर्मे श्रद्धा अहिंसा भूत-

---

१ स्पर्शवत्द्रव्यसंयोगो विरोधी यस्येति विग्रहः, एवमग्रेऽपि.
२ उत्तरोत्तरप्रत्ययापेक्षात्. २ पु.
३ सूत्रचर्मवस्त्रकम्बलादिषु २ पु.
४ इति संस्कारः. पा २ पु
५ संविज्ञान २ पु
६ अभिसन्धिरभिसन्धानम्.

हितं सत्यवचनमस्तेयं ब्रह्मचर्य्यमनुपधा[1]क्रोधवर्जनमभिषेचनं शुचिद्रव्यसेवनं विशिष्टदेवताभक्तिरुपवासोऽप्रमादश्च ॥ ब्राह्मणक्षत्रियविशामिज्याध्ययनदानादि ब्राह्मणस्य विशिष्टानि प्रतिग्रहाध्यापनयाजनानि स्ववर्णनियताश्च संस्काराः । क्षत्रियस्य सम्यक्प्रजापरिपालनमसाधुनिग्रहो युद्धेष्वनिवर्तनं स्वकीयाश्च संस्काराः । वैश्यस्य क्रयविक्रयकृषिपशुपालनानि स्वकीयाश्च संस्काराः । शूद्रस्य पूर्ववर्णेषु पारतन्त्र्यममन्त्रिकाश्च क्रियाः । आश्रमिणां ब्रह्मचारिणो गुरुकुलवासिनः स्वशास्त्रविहितानि गुरुशुश्रूषाग्नीन्धनभिक्षाचरणादीनि मधुमांसदिवास्वप्नाभ्यञ्जनादिवर्जनं च विद्याव्रतस्नातकस्य कृतदारकस्य[2] गृहस्थस्य शालीनयायावरवृत्त्युपार्जितैर्धनैर्भूतमनुष्यदेवपितृब्रह्माख्यानां[3] पंचानां महायज्ञानां सायंप्रातरनुष्ठानम्, एकाग्निविधानेन पाकयज्ञसंस्थानां नित्यानां शक्तौ विद्यमानायामग्न्याधेयादीनां हविर्यज्ञसंस्थानां, अग्निष्टोमादीनां च सोमयज्ञसंस्थानां ऋत्वन्तरेषु च ब्रह्मचर्य्यम्, अपत्योत्पादनं च ॥ ब्रह्मचारिणो गृहस्थस्य वा ग्रामान्निःसृत्य वनेषु वासो वल्कलाजिनकेशश्मश्रुनखरोमधारणं वन्याम्बुहुतातिथिशेषभोजनानि वनस्थस्य । त्रयाणामन्यतमस्य श्रद्धावतः सर्वभूतेभ्यो नित्यमभयं दत्वा संन्यस्य स्वानि कर्माणि यमनियमेष्वप्रमत्तस्य षट्पदार्थपरिसंख्या[4]नाद्[5] योगस्य साधनं प्रवर्जितस्य[6] दृष्टञ्च प्रयोजनमनुद्दिश्यैतानि साधनानि भावप्रसाद[7]ञ्चापेक्ष्यात्ममनसो संयोगाद्धर्मोत्पत्तिरिति[8] ॥

[1] अनुपधा, अवञ्चकता.
[2] दारपरिग्रहस्य. २ पु.
[3] शालामर्हतीति शालीनोऽतिशयेन याति देशान्तरमिति यायावरस्तयोर्वृत्ती अध्यापना देशान्तरगमनादि.
[4] परिसंख्यानं प्रसंख्यानं । तत्त्वज्ञानमिति यावत्.
[5] प्रसंख्यान प्रयोगसाधन. पा. २ पु.
[6] प्रव्राजितस्येति. पा. २ पु.
[7] भावप्रसादं चित्तप्रसादम्.
[8] रितिधर्मः २ पु.

अधर्मोऽप्यात्मगुणः कर्त्तुरहितप्रत्यवायहेतुरतीन्द्रियः अन्त्यदुःखसंम्यग्ज्ञानं विरोधी । तस्य साधनानि शास्त्रप्रतिषिद्धानि धर्मसाधनविपरीतानि हिंसानृतस्तेयादीनि विहिताकरणं प्रमादश्च एतानि दुष्टाभिसन्धिं चापेक्ष्यात्ममनसोः संयोगादधर्मोत्पत्तिरिति । अविदुषो रागद्वेषवतः प्रवर्त्तकाद्धर्मात्प्रकृष्टात्स्वल्पाधर्मसहिताद्ब्रह्मेन्द्रप्रजापति पितृमनुष्यलोकेष्वाशयानुरूपैरिष्टशरीरेन्द्रियविषयसुखादिभिर्योगो भवति । तथा प्रकृष्टादधर्मात्स्वल्पधर्मसहितात्प्रेततिर्यग्योनिस्थानेष्वनिष्टशरीरेन्द्रियदुःखादिभिर्योगो भवति । एवं प्रवृत्तिलक्षणाद्धर्मादधर्मसहिताद्देवमनुष्यतिर्यङ्नरकेषु पुनः पुनः संसारबन्धो भवति । ज्ञानपूर्वकात्तु कर्मणः कृतादसङ्कल्पितफलाद्विशुद्धे कुले जातस्य दुःखवियोगोपायजिज्ञासोराचार्यमुपगम्योत्पन्नषट्पदार्थतत्त्वज्ञानस्याज्ञाननिवृत्तौ विरक्तस्य रागद्वेषाभावात्तज्जयोर्धर्माधर्मयोरनुत्पत्तौ सञ्चितयोर्निरोधे सन्तोषसुखं शरीरपरिखेदं चोत्पाद्य रागादिनिवृत्तौ निवृत्तिलक्षणः केवलो धर्मः परमार्थदर्शनजं सुखं कृत्वा निवर्त्तते तदा निर्बीजस्यात्मनः शरीरादिनिवृत्तौ पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवदुपशमो मोक्ष इति ॥

शब्दोऽम्बरगुणः श्रोत्रग्राह्यः क्षणिकः कार्यकारणोभयविरोधी[6] । संयोगविभागशब्दजः प्रदेशवृत्तिः समानासमानजातीयकारणकः स च द्विविधो वर्णलक्षणोऽवर्णलक्षणश्च । (अकारादिर्वर्णलक्षणः शङ्खादिनिमित्तोऽवर्णलक्षणः ।) तत्र वर्णलक्षणस्योत्पत्तिरात्ममनसोः संयोगात्स्मृत्यपेक्षाद्वर्णोच्चारणेच्छा तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्मवायुसंयोगाद्वायौ कर्म जायते । स च वायुरूर्ध्वं गच्छन्कण्ठादीनभिहन्ति । ततः

---

१ संविज्ञानं. २ पु.
२ अवश्यकर्त्तव्याकरणमयथाकरणञ्च प्रमादवशः, २ पु.
३ ज्ञानपूर्वकात्कर्मणोऽसंकल्पितफलाद्विशुद्धेः पा. २ पु
४ विप्रयोगोपाय. २ पु.
५ इति । धर्मः २ पु
६ कार्यमुत्तरशब्दः कारणं संयोगविभागशब्दा एतदुभयेनाप्ययं विरुध्यते.

स्थानवायुसंयोगापेक्षात्स्थानाकाशसंयोगाद्वर्णोत्पत्तिः अवर्णलक्षणश्च भेरीदण्डसंयोगापेक्षाद्भेर्याकाशसंयोगादुत्पद्यते वेणुपर्वविभागापेक्षाद्वेण्वाकाशविभागाच्च । शब्दाच्च शब्दनिष्पत्तिः शब्दात्संयोगविभागनिष्पन्नाद्वीचिसन्तानवच्छब्दसन्तानः । एवं सन्तानेन श्रोत्रदेश[1]मागतस्यान्त्यशब्दस्य ग्रहणम् । श्रोत्रशब्दयोः संयोगगमनाभावादप्राप्तस्य चानुपलब्धेः परिशेषात्सन्तानसिद्धिरिति गुणपदार्थः समाप्तः ॥

उत्क्षेपणादीनां पञ्चानामपि कर्मत्वसम्बन्धः । एकद्रव्यवत्त्वं क्षणिकत्वं मूर्तद्रव्यवृत्तित्वमगुणवत्त्वम् गुरुत्वद्रवत्वप्रयत्नसंयोगजत्वं स्वकार्यसंयोगविरोधित्वं संयोगविभागनिरपेक्षकारणत्वम् असमवायिकारणत्वं स्वपराश्रयसमवेतकार्यारम्भकत्वं समानासमानजातीयानारम्भकत्वं प्रतिनियतजातियोगित्वं दिग्विशिष्टकार्यारम्भकत्वञ्च विशेषः । तत्रोत्क्षेपणं शरीरावयवेषु तत्सम्बद्धेषु च यदूर्ध्वभाग्भिः प्रदेशैः संयोगकारणमधोभाग्भिश्च प्रदेशैर्विभागकारणं कर्मोत्पद्यते गुरुत्वप्रयत्नसंयोगेभ्यः तदुत्क्षेपणम् । तद्विपरीतसंयोगविभागकारणं कर्मावक्षेपणम् । ऋजुनो द्रव्यस्याग्रावयवानां तद्देशैर्विभागः संयोगश्च मूलप्रदेशैर्येन कर्मणावयवी कुटिलः सञ्जायते तदाकुञ्चनम् । तद्विपर्ययेण संयोगविभागोत्पत्तौ येन कर्मणाऽवयवी ऋजुः सञ्जायते तत्प्रसारणम् । यदनियतदिग्देशविभागकारणं तद्गमनमिति । एतत्पञ्चविधमपि कर्म शरीरावयवेषु तत्सम्बद्धेषु च सत्प्रत्ययमसत्प्रत्ययञ्च । यदन्यत्तदप्रत्ययमेव । एतेष्वन्येषु च तद्गमनमेव । ननु कर्मणां जातिपञ्चकत्वमयुक्तं गमनाविशेषात् ; सर्वं हि क्षणिकं कर्म चलनमात्रमुत्पन्नमाश्रयस्योर्ध्वमधस्तिर्यग्वा परमाणुभिरमात्रैः प्रदेशैः संयोगविभागान् करोति सर्वत्र गमनप्रत्ययोऽविशिष्टः तस्माद्गमनमेव सर्वमिति न वर्गशः-

---

१ एवं संयोगविभागशब्दनिष्पन्नस्य वीचिसन्तानवत् शब्दस्य सन्ताने श्रोत्रदेशम् पा॰ २ पु

प्रत्ययानुवृत्तिव्यावृत्तिदर्शनादिहोत्क्षेपणमवक्षेपणमित्येवं सर्वत्र वर्गशः प्रत्ययानुवृत्तिर्व्यावृत्तिश्च दृष्टा । तेन तद्धेतुः सामान्यविशेषभेदोऽवगम्यते तेषांमुदाद्युपसर्गविशेषात्प्रतिनियतदिग्विशिष्टकार्यारम्भादुपलक्षणभेदोऽपि सिद्ध इति । एवमपि चैवेत्यवधारणानुपपत्तिः निष्क्रमणप्रवेशनादिष्वपि वर्गशः प्रत्ययानुवृत्तिदर्शनात् । यदि ह्युत्क्षेपणादिषु सर्वत्र वर्गशः प्रत्ययानुवृत्तिव्यावृत्तिदर्शनाज्जातेर्भेद इष्यते एवं निष्क्रमणप्रवेशनादिष्वपि । कार्यभेदात्तेषु प्रत्ययानुवृत्तिव्यावृत्ती इति चेत् उत्क्षेपणादिष्वपि कार्यभेदादेव प्रत्ययानुवृत्त्यातिवृत्तिप्रसङ्गः अथ समानेऽपि वर्गशः प्रत्ययानुवृत्तिभेदे उत्क्षेपणादीनां जातिभेदो न निष्क्रमणादीनामित्यत्र न विशेषहेतुरिति चेत् न । जातिसङ्करप्रसङ्गात् निष्क्रमणादीनां जातिभेदात्प्रत्ययानुवृत्तिव्यावृत्ती जातिसङ्करः प्रसज्यते । कथम् । द्वयोर्द्रष्ट्रोरेकस्मादपवरकादपवरकान्तरं गच्छतो युगपन्निष्क्रमणप्रवेशनप्रत्ययौ दृष्टौ । तथा द्वारप्रदेशे प्रविशति निष्क्रामतीति च । यदि तु प्रतिसीराद्यपनीतं भवति तदा निष्क्रमणप्रत्ययो नापि प्रवेशनप्रत्यय इति किं तर्हि गमनप्रत्यय एव भवति । तथा नाडिकायां वंशपर्णादौ पतति द्रष्टॄणां युगपद्भ्रमणपतनप्रवेशनप्रत्यया दृष्टा इति जातिसंकरप्रसंगः । न चैवमुत्क्षेपणादिषु प्रत्ययसंकरो दृष्टः । तस्मादुत्क्षेपणादीनां जातिभेदात्प्रत्ययव्यावृत्तिः निष्क्रमणादीनां तु तत्कार्यभेदादिति । कथं युगपत्प्रत्ययभेद इति चेत् । अथ मतं यथा

१ इत्यादि. पा २ पु

२ तेषामुत्क्षेपणादीनाम्.

३ वर्गशः समूहरूपेण.

४ अपवरकाद्वासगृहात्

५ प्रतिसीरा जवनिका.

६ प्रसंग इति. पा. २ पु.

७ अथ मतमिति. एतच्च पूर्वपक्षस्य विवरण यतोऽयमक्षराणां क्रमो न सूत्रवद्धिस्य पुनस्तत्रैव निर्देशो वृत्तिरिव तस्यापि च प्रतिनिर्देशो भाष्यमिव

जातिसंकरो नास्ति एवमनेककर्मसमावेशोऽपि नास्तीति एकस्मिन्कर्मणि युगपद्द्रष्टृणां भ्रमणपतनप्रवेशनप्रत्ययाः कथं भवन्तीति । न । अवयवावयविनोर्दिग्देशविशिष्टसंयोगविभागभेदात् योहि द्रष्टाऽवयवानां पार्श्वतः पर्य्यायेण दिक्प्रदेशैः संयोगविभागान्पश्यति तस्य भ्रमणप्रत्ययो भवति यो ह्यवयविन उर्द्ध्वप्रदेशैर्विभागमधः संयोगं चावेक्षते तस्य पतनप्रत्ययः । यः पुनर्नालिकान्तर्देशे संयोगं बहिर्देशे च विभागं पश्यति तस्य प्रवेशनप्रत्ययः । सिद्धकार्यभेदान्निष्क्रमणादीनां प्रत्ययभेदः । भवतूत्क्षेपणादीनां जातिभेदात्प्रत्ययभेदः निष्क्रमणादीनां तु कार्यभेदादिति ॥

अथ गमनत्वं किं कर्मत्वपर्याय आहोस्विदपरं सामान्यमिति । कुतस्ते संशयः । समस्तेषूत्क्षेपणादिषु कर्मप्रत्ययवत्गमनप्रत्ययाविशेषात्कर्मत्वपर्याय इति गम्यते, यत्तूत्क्षेपणादिवद्विशेषसंज्ञयाभिहितं तस्मादपरं सामान्यं स्यादिति ॥ न कर्मत्वपर्य्यायत्वात् आत्मत्वपुरुषत्ववत्कर्मत्वपर्याय एव गमनत्वम् । अथ विशेषसंज्ञायां किमर्थं गमनग्रहणं कृतमिति । न । भ्रमणाद्यवरोधार्थत्वात् । उत्क्षेपणादिशब्दैरनवरुद्धानां भ्रमणपतनस्यन्दनादीनामवरोधार्थं गमनग्रहणं कृतम् । अन्यथाहि यान्येव चत्वारि विशेषसंज्ञयोक्तानि तान्येव सामान्यविशेषसंज्ञाविषयाणि प्रसज्येरन्निति ॥ अथवास्त्वपरं सामान्यं गमनत्वमनियतदिग्देशसंयोगविभागकारणेषु भ्रमणादिष्वेव वर्तते ग-

१ अत्र ब्रूमः नावय इत्यादि. पा. २ पु.
२ प्रत्ययो भवतीति पा. २ पु.
३ कार्यभेदात् अवयवावयविनोरित्यादिग्रन्थेन निरुक्तात्.
४ पूर्वोक्तमभ्यनुज्ञाय संशयितः पृच्छान्तरं दर्शयति अथेत्यादि
५ संशयहेतुं पृच्छति कुत इति.
६ उत्तरयति नेत्यादिना.
७ अथ विशेषसंज्ञया. पा. २ पु.
८ चत्वारि. उत्क्षेपणादीनि.

गमनशब्दस्तूत्क्षेपणादिषु भाक्तो द्रष्टव्यः । स्वाश्रयसंयोगविभागकर्तृत्वसामान्यादिति[1] । सत्प्रत्ययकर्मविधिः । कथम् । चिकीर्षितेषु यज्ञाध्ययनदानकृष्यादिषु यदा हस्तमुत्क्षेप्तुमिच्छत्यवक्षेप्तुं वा तदा हस्तवत्यात्मप्रदेशे प्रयत्नः सञ्जायते तं प्रयत्नं गुरुत्वं चापेक्षमाणादात्महस्तसंयोगादसमवायिकारणाद्धस्ते कर्म भवति । हस्तवत्सर्वशरीरावयवेषु पादादिषु शरीरे चेति । तत्सम्बद्धेष्वपि कथम् । यदा हस्तेन मुशलं गृहीत्वेच्छां करोति उत्क्षिपामि हस्तेन मुशलमिति तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्महस्तसंयोगाद्यस्मिन्काले हस्ते उत्क्षेपणकर्मोत्पद्यते तस्मिन्नेव काले तं[2] प्रयत्नमपेक्षमाणाद्धस्तमुशलसंयोगान्मुशलेऽपि कर्म भवति । तदनन्तरं दूरमुत्क्षिप्ते मुशले तदर्थेच्छा निवर्तते । पुनरप्यवक्षेपणेच्छोत्पद्यते । तदनन्तरं[3] प्रयत्नस्तमपेक्षमाणाद्यथोक्तात्संयोगद्वयाद्धस्तमुशलयोर्युगपदवक्षेपणकर्मणी भवतः । ततोऽन्त्येन मुशलकर्मणोलूखलमुशलयोरभिघाताख्यः संयोगः क्रियते । स च संयोगो मुशलगत-[4]वेगमपेक्षमाणो मुशलेऽप्रत्ययमुत्पतनकर्म करोति । तत्कर्माभिघातापेक्षं मुशले संस्कारमारभते तमपेक्ष्य मुशलहस्तसंयोगोऽप्रत्ययं हस्तेऽप्युत्पतनकर्म करोति । यद्यपि प्राक्तनः संस्कारोऽभिघाताद्विनष्टस्तथापि मुशलोलूखलयोः संयोगः पटुकर्मोत्पादकः संयोगविशेषभावात्तस्य संस्कारारम्भे साचिव्यसमर्थो भवति । अथवा प्राक्तन एव पटुः संस्कारोऽभिघातादविनश्यन्नवस्थित इति । अतः संस्कारवति पुनः संस्कारो नास्ति । अतो यस्मिन्नेव काले संस्कारापेक्षादभिघातादप्रत्ययं मुशले, उत्पतनकर्म तस्मिन्नेव काले तमेव संस्कारमपेक्षमाणान्मुशलहस्तसंयोगादप्रत्ययं हस्तेऽप्युत्पतनकर्मेति ॥ पाणिमुक्तेषु गमन-

१ सामान्यादीति. पा. २ पु.
२ अपेक्षमाणात्, कारणत्वेनापेक्षमाणात्.
३ उत्क्षेपणेच्छा.
४ वेगाख्यं संस्कारम्.

नविधिः । कथम् । यदा तोमरं गृहीत्वा हस्तेनोत्क्षेप्तुमिच्छोत्पद्यते तदनन्तरं प्रयत्नस्तमपेक्षमाणाद्यथोक्तात्संयोगद्वयात्तोमरहस्तयोर्युगपदाकर्षणकर्मणी भवतः । प्रसारिते च हस्ते तदाकर्षणार्थः प्रयत्नो निवर्तते । तदनन्तरं तिर्यगूर्ध्वं दूरमासन्नं वा क्षिपामीतीच्छा संजायते । तदनन्तरं तदनुरूपः प्रयत्नस्तमपेक्षमाणस्तोमरहस्तसंयोगो नोदनाख्यः । तस्मान्नोदनाख्याद्यथोक्तात्तोमरे कर्मोत्पन्नं नोदनापेक्षं तस्मिन् संस्कारमारभते । ततः संस्कारनोदनाभ्यां तावत्कर्माणि भवन्ति यावद्धस्ततोमरविभाग इति । ततो विभागान्निवृत्ते नोदने संस्कारादूर्ध्वं तिर्यगासन्नं वा प्रयत्नानुरूपाणि कर्माणि भवन्ति आपतनादिति । तथा यन्त्रमुक्तेषु गमनविधिः । कथम् यो बलवान् कृतव्यायामो वामेन करेण धनुर्विष्टभ्य दक्षिणेन शरं संधाय सशरां ज्यां गृहीत्वेच्छां करोति सज्येषुमाकर्षयाम्येतद्धनुरिति । तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्महस्तसंयोगादाकर्षणकर्म हस्ते यदैवोत्पद्यते तदैव तमेव प्रयत्नमपेक्षमाणाद्धस्तज्याशरसंयोगाज्ज्यायां शरे च कर्म प्रयत्नविशिष्टं हस्तज्याशरसंयोगमपेक्षमाणाभ्यां धनुर्ज्याकोटिसंयोगाभ्यां कर्मणी धनुः कोट्योरिति एतत्सर्वं युगपत । एवमाकर्णान्ताकृष्टे धनुषि नातः परमनेन गन्तव्यमिति यज्ज्ञानं ततस्तदाकर्षणार्थस्य प्रयत्नस्य विनाश इति । ततः पुनर्मोक्षणेच्छा तदनन्तरं प्रयत्नस्तमपेक्षमाणादात्माङ्गुलिसंयोगादङ्गुलिकर्म । तस्माज्ज्याङ्गुलिशरविभागः । ततो विभागात्संयोगनाश इति ।

---

१ तोमरं शल्याग्रं दण्डाकारमस्त्रभेदम्.
२ इच्छा जायते. पा. २ पु.
३ नोदनाख्यः नोदननामा.
४ तस्मिन्नेव काले पा. २ पु.
५ मुष्टिना गृहीत्वेच्छां पा. २ पु.
६ सज्येषु ज्या मौर्वी, इषुर्बाणस्ताभ्यां सहित धनुरिति सम्बन्धः । सेष्वाकर्षयामि. पा. २ पु.
७ आकर्णादाकृष्टे.

तस्मिन्विनष्टे प्रतिबन्धकाभावाद्यदा धनुषि वर्त्तमानः स्थितिस्थापकः संस्कारो मण्डलीभूतं धनुर्यथावस्थितं स्थापयति तदा तमेव संस्कारमपेक्षमाणाज्ज्याधनुःसंयोगाज्ज्यायां कर्मोत्पद्यते । तत्स्वकारणापेक्षं ज्यायां संस्कारं करोति । तमपेक्षमाण इषुज्यासंयोगो नोदनम् । तस्मादिषावाद्यं कर्म नोदनापेक्षमिषौ संस्कारमारभते तस्मात्संस्कारान्नोदनसहायात्तावत्कर्माणि भवन्ति यावदिषुज्याविभागः । ततो विभागान्नोदने निवृत्ते कर्माण्युत्तरोत्तराणि संस्काराद्यापतनादिति[2] बहूनि कर्माणि क्रमशः कस्मात्संयोगबहुत्वादेकस्तु संस्कारोऽन्तराले कर्मणोऽपेक्ष्य कारणाभावादिति । एवमात्माधिष्ठितेषु सत्प्रत्ययमसत्प्रत्ययं च कर्मोक्तमिदमनधिष्ठितेषु बाह्येषु चतुर्षु महाभूतेष्वप्रत्ययं कर्म गमनमेव नोदनादिभ्यो भवति । तत्र नोदनं गुरुत्वद्रवत्ववेगप्रयत्नान्समस्तान्व्यस्तानपेक्षमाणो यः संयोगविशेषः । नोदनमविभागहेतोः कर्मणः कारणमिति तस्माच्चतुर्ष्वपि महाभूतेषु कर्म भवति यथा पङ्काख्यायां पृथिव्यां वेगापेक्षो यः संयोगो विभागहेतोरेकस्य कर्मणः कारणं सोऽभिघाताख्यः तस्मादपि महाभूतेषु कर्म भवति यथा पाषाणादिषु पादादिभिर्नुद्यमानायामभिहन्यमानायां वा पङ्काख्यायां पृथिव्यां यः संयोगो नोदनाभिघातयोरन्यतरापेक्ष उभयापेक्षो वा यः संयुक्तसंयोगस्तस्मादपि ये प्रदेशा नुद्यन्ते नाप्यभिहन्यन्ते तेष्वपि कर्म जायते । पृथिव्युदकयोर्गुरुत्वविधारकसंयोगप्रयत्नवेगाभावे सति गुरुत्वादधोगमनं तत्पतनं यथा मुसलशरीरेष्वादिषूक्तम् । तत्राद्यं कर्म गुरुत्वात् । द्वितीयादीनि तु गुरुत्वसंस्काराभ्याम् । स्रोतोभूतानामपां स्थलान्निम्नाभिसर्पणं यत्तद्द्रवत्वात्स्यन्दनम् । कथम् । समन्ताद्रोधः संयोगेनावयविद्रवत्वं प्रतिबद्धम् । अवयवद्रवत्वमप्येकार्थ-

१ धनुर्ज्याशरसंयोगाज्ज्यायां शरे च पा. २ पु.
२ संस्काराद्देवापतनादिति. २ पु.
३ अविभागहेतुः. २ पु.

समवेतं तेनैव प्रतिबद्धम् । उत्तरोत्तराणि अवयवद्रवत्वानि संयुक्तसंयोगैः प्रतिबद्धानि । यदा तु मात्रया सेतुभङ्गः कृतो भवति तदा समन्तात्प्रतिबद्धस्यावयविद्रवत्वस्य कार्यारम्भो नास्ति । सेतुसमीपस्थस्य त्ववयवद्रवत्वस्योत्तरोत्तरेषामवयवद्रवत्वानां प्रतिबन्धकाभावाद्वृत्तिलाभः । ततः क्रमशः संयुक्तानामेवाभिसर्पणं ततः पूर्वद्रव्यविनाशे प्रबन्धेनावस्थितैरवयवैर्दीर्घद्रव्यमारभ्यते । तत्र कारणगुणपूर्वक्रमेण द्रवत्वमुत्पद्यते । तत्र च कारणानां संयुक्तानां प्रबन्धेन गमनेन यदवयविनि कर्मोत्पद्यते तत्स्यन्दनाख्यमिति । संस्कारात्कर्म इत्यादिषूक्तम् । तथा चक्रादिष्ववयवानां पार्श्वतः प्रतिनियतदिग्देशसंयोगविभागोत्पत्तौ यदवयविनि संस्कारादनियतदिग्देशसंयोगविभागनिमित्तं कर्म तद्भ्रमणमिति । एवमादयो गमनविशेषाः । प्राणाख्ये वायौ कर्म आत्मवायुसंयोगादिच्छाद्वेषप्रयत्नापेक्षात् जाग्रत इच्छानुविधानात् सुप्तस्य जीवनपूर्वकप्रयत्नापेक्षात् ॥ आकाशकालदिगात्मनां सत्यपि द्रव्यत्वे निष्क्रियत्वम् सामान्यादिवदमूर्त्तत्वात् । मूर्त्तिरसर्वगतद्रव्यपरिमाणं तदनुविधायिनी च क्रिया । सा चाकाशादिषु नास्तीति । तस्मान्न तेषां क्रियासम्बन्धोऽस्तीति । सविग्रहे मनसीन्द्रियान्तरसम्बन्धार्थं जाग्रतः कर्मात्ममनःसंयोगादिच्छाद्वेषपूर्वकप्रयत्नाद्यथाभिप्रायमिन्द्रियान्तरेण विषयोपलब्धिदर्शनात् । सुप्तस्य प्रबोधकाले जीवनपूर्वकप्रयत्नापेक्षात् । अपसर्पणमुत्सर्पणं च कर्मात्ममनसोः संयोगाददृष्टापेक्षात् । कथम् । यदा जीवनसहकारिणोर्धर्माधर्मयोर्वैक-

१ मात्रया लेशेन.

२ मात्रयापि सेतुभेद. पा. २ पु.

३ समन्तात्प्रसिद्धत्वादवयवि. पा. २ पु.

४ सेतुसमीपस्थावयवद्रवत्वानाम्. पा २ पु.

५ इच्छानुविधानदर्शनात्. ३ पु.

६ आत्मनोऽभिप्रायानुरोधेन.

स्यात्तत्पूर्वप्रयत्नवैकल्यात्प्राणवायोर्निरोधे सत्यन्याभ्यां लब्धवृत्तिभ्यां धर्माधर्माभ्यामात्ममनसोः संयोगसचिवाभ्यां मृतशरीराद्विभागकारणमपसर्पणकर्मोत्पद्यते । ततः शरीराद्बहिरपगतं ताभ्यामेव धर्माधर्माभ्यामुत्पन्नातिवाहिकेशरीरेण सम्बध्यते तत्संक्रान्तं स्वर्गं नरकं वा गत्वाऽऽशयानुरूपेण शरीरेण संबध्यते । तत्संयोगार्थं कर्मोपसर्पणाख्यमिति । योगिनो बहिरुद्रेचितस्य मनसोऽभिप्रेतदेशे गमनं प्रत्यागमनं च सर्गकाले प्रत्यग्रेण शरीरेण सम्बन्धार्थं कर्मादृष्टकारितम् अन्यदपि महाभूतेषु यत्प्रत्यक्षानुमानाभ्यामनुपलभ्यमानं कारणमुपकारापकारसमर्थं भवति तदप्यदृष्टकारितम् तथा सर्गादावणुकर्माग्निवाय्वोरूर्ध्वतिर्यग्गमनं महाभूतानां प्रक्षोभणमभिषिक्तानां मणीनां तस्करं प्रतिगमनमयसोऽयस्कान्ताभिसर्पणं चेति कर्मपदार्थः समासः ॥

द्विविधं सामान्यं परमपरञ्च स्वविषयसर्वगतमभेदात्मकमनेकवृत्ति । एकद्विबहुष्वात्मस्वरूपानुवृत्तिप्रत्ययकारणम् । कथम् । प्रतिपिण्डं सामान्यापेक्षज्ञानोत्पत्तावभ्यासप्रत्ययजनितसंस्कारादतीतज्ञानप्रबन्धप्रत्यवेक्षणाद्यत्समनुगतमस्ति तत्सामान्यम् । तत्र परं सत्तासामान्यमनुवृत्तिप्रत्ययकारणमेव । यथा परस्परविशिष्टेषु चर्मवस्त्रकम्बलादिष्वेकस्मान्नीलद्रव्यसम्बन्धान्नीलं नीलमिति प्रत्ययानुवृत्तिः तथा परस्परविशिष्टेषु द्रव्यगुणकर्मस्वविशिष्टा सत्सदिति प्रत्ययानुवृत्तिः सा चार्थान्तराद्भवितुमर्हति यत्तदर्थान्तरं सा सत्तेति सिद्धा सत्सदिति प्रत्ययानुवृत्तेः, तस्मात्सत्तासामान्यमेव । अपरं द्रव्यत्वगुणत्व-

---

१ जीवनसहायवैकल्येन तत्पूर्वकप्रयत्नवैकल्यात्प्राणनिरोधे. २ पु.
२ अतिवाहयत्यात्मानमित्यतिवाहिकं सूक्ष्मशरीरम्.
३ स्थूलेन शरीरेण
४ योगिना च. २ पु.
५ प्रत्यग्रेण सर्गादावुत्पन्नेनाभिनवेन शरीरेण.
६ यथा. २ पु.
७ अनुवृत्तिबुद्धि- २ पु.
८ एकस्मात. २ पु.

कर्मत्व.च्यनुवृत्तिव्यावृत्तिप्रत्ययहेतुत्वात्सामान्यं विशेषश्च । तत्र द्रव्यत्वं परस्परविशिष्टेषु पृथिव्यादिष्वनुवृत्तिप्रत्ययहेतुत्वात्सामान्यं गुणकर्मभ्यो व्यावृत्तिहेतुत्वाद्विशेषः । तथा गुणत्वं परस्परविशिष्टेषु रूपादिष्वनुवृत्तिप्रत्ययहेतुत्वात्सामान्यं द्रव्यकर्मभ्यो व्यावृत्तिप्रत्ययहेतुत्वाद्विशेषः । तथा कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्तिप्रत्ययहेतुत्वात्सामान्यं द्रव्यगुणेभ्यो व्यावृत्तिहेतुत्वाद्विशेषः । एवं पृथिवीत्वरूपत्वोत्क्षेपणत्वगोत्वघटत्वादीनां प्राण्यप्राणिगतानामनुवृत्तिव्यावृत्तिप्रत्ययहेतुत्वात्सामान्यविशेषभावः सिद्धः । तानि द्रव्यत्वादीनि प्रभूतविषयत्वात्प्राधान्येन सामान्यानि स्वाश्रयविशेषकत्वाद्भक्त्या विशेषाख्यानीति लक्षणभेदादेषां द्रव्यगुणकर्मभ्यः पदार्थान्तरं (त्वं) च सिद्धम् । अत एव च नित्यत्वम् । द्रव्यादिष्वनुवृत्तिनियमात्प्रत्ययभेदाच्च परस्परतश्चान्यत्वम् । प्रत्येकं स्वाश्रयेषु लक्षणविशेषाद्विशेषलक्षणाभावाच्चैकत्वम् । यद्यप्यपरिच्छिन्नदेशानि सामान्यानि तथाप्युपलक्षणनियमात्कारणसामग्रीनियमाच्च स्वविषयसर्वगतानि । अन्तराले संयोगसमवायवृत्त्यभावादव्यपदेश्यानि इति सामान्यपदार्थः समाप्तः ॥

अन्तेभवा अन्त्याः स्वाश्रयाविशेषत्वाद्विशेषाः । विनाशारम्भरहितेषु नित्यद्रव्येष्वण्वाकाशकालदिगात्ममनःसु प्रतिद्रव्यमेकैकशो वर्त्तमाना अत्यन्तव्यावृत्तबुद्धिहेतवः । यथास्मदादीनां गवादिष्वश्वादिभ्यस्तुल्याकृतिगुणक्रियावयवसंयोगनिमित्ता प्रत्ययव्यावृत्तिर्दृष्टा यथा गौः शुक्लः शीघ्रगतिः ककुद्मान् महाघण्ट इति तथास्मद्विशिष्टानां योगिनां

१ गुणकर्मभ्याम् २ पु.
२ कर्मभ्याम्. २ पु.
३ द्रव्यगुणाभ्याम्. २ पु.
४ सामान्यं विशेष इति बुद्ध्यपेक्षम् १।२।३। इत्यादि सूत्रोक्तात्.
५ अन्तेषु. २ पु.
६ विशेषकत्वाद्व्यावर्त्तकत्वात्.
७ यथा इति न. २ पु.

नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनःसु चान्यनिमित्तासम्भवाद्येभ्यो निमित्तेभ्यः प्रत्याधारमयमस्माद्विलक्षण इति प्रत्ययव्यावृत्तिः, देशकालविप्रकृष्टे च परमाणौ स एवायमिति प्रत्यभिज्ञानं च भवति यतस्तेऽन्त्या विशेषा इति । यदि पुनरन्त्यविशेषमन्तरेण योगिनां योगजधर्मात्प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं च स्यात्ततः किं स्यात् । नैवं भवति । यथा न योगजाद्धर्मादशुक्ले शुक्लप्रत्ययः सञ्जायते अत्यन्ताद्दृष्टे प्रत्यभिज्ञानं यदि स्यात् मिथ्याप्रत्ययः स्यात् । तथेहाप्यन्त्यविशेषमन्तरेण योगिनां योगजधर्मात्प्रत्ययव्यावृत्तिः । प्रत्यभिज्ञानं च भवितुमर्हति[1] । अथान्त्यविशेषेष्विव परमाणुषु कस्मान्न स्वतः प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं वा कल्प्यत इति चेत् । न । तादात्म्यात् । इह तादात्म्यकल्पनानिमित्तप्रत्ययो भवति । यथा घटादिषु प्रदीपात् न तु प्रदीपे प्रदीपात् । यथा च स्वमांसादीनां स्वत एवाशुचित्वं तद्योगादन्येषाम् तथेहापि तादात्म्यादन्त्यविशेषेषु स्वत एव प्रत्ययव्यावृत्तिः तद्योगात्परमाण्वादिष्विति इति विशेषपदार्थः ॥

अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः द्रव्यगुणकर्मसामान्यविशेषाणां कार्यकारणभूतानामकार्यकारणभूतानां वा अयुतसिद्धानामाधार्याधारभावेनावस्थितानामिहेदमिति बुद्धिर्यतो भवति यतश्चासर्वगतानामधिगतान्यत्वानामविष्वग्भावः स समवायाख्यः सम्बन्धः । कथम् । यथेह कुण्डे दधीति प्रत्ययः सम्बन्धे सति दृष्टः तथेह तन्तुषु पटः इह वीरणेषु कट-

१ प्रत्याधार विलक्षणोऽयमिति प्रत्यय २ पु

२ ततः किं स्यादिति न २ पु

३ अधिकरोति मिथ्याप्रत्यय इत्यनुषज्यते । धर्मान्न प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं वा भवितुमर्हति २ पु सत एव विषयस्य योगिभिरपि ज्ञानं न त्वत्यन्तासत इति भाव

४ इह तादात्म्यकल्पनानिमित्त प्रत्ययो भवति २ पु

५ अविष्वग्भावेनावस्थितानाम् २ पु

इह द्रव्ये । द्रव्यगुणकर्माणि इह द्रव्यगुणकर्मस्वपि सत्ता इह द्रव्ये द्रव्यत्वमिह गुणे गुणत्वमिह कर्मणि कर्मत्वमिह नित्येऽन्त्य विशेषा इति प्रत्ययदर्शनादस्त्येषां सम्बन्ध इति ज्ञायते । न चासौ संयोगः सम्बन्धिनामयुतसिद्धत्वात् । अन्यतरकर्मजादिनिमित्ताभावाद्विभागान्तत्वादर्शनादधिकरणाधिकर्तव्ययोरेव भावादिति । स च द्रव्यादिभ्यः पदार्थान्तरं भाववल्लक्षणभेदात् । यथा भावस्य द्रव्यत्वादीनां स्वाधारे स्वात्मानुरूपप्रत्ययकर्तृत्वात् स्वाश्रयादिभ्यः परस्परतश्चार्थान्तरभावः तथा समवायस्यापि पञ्चस्वपि पदार्थेषु इहेति प्रत्ययदर्शनात्तेभ्यः पदार्थान्तरत्वमिति । न च संयोगवन्नानात्वमिति भाववल्लिङ्गाविशेषाद् विशेषलिङ्गाभावाच्च तस्माद्भाववत्सर्वत्रैकः समवायः । ननु द्रव्यगुणकर्मणां द्रव्यत्वगुणत्वकर्मत्वादिभिर्विशेषणैः सम्बन्धैकत्वात्पदार्थसंकरप्रसङ्ग इति । न । स्वाधाराधेयनियमात् । यद्यप्येकः समवायः सर्वत्र स्वतन्त्रस्तथाप्याधाराधेयनियमोऽस्ति । कथम् । द्रव्येष्वेव द्रव्यत्वं गुणेष्वेव गुणत्वं कर्मस्वेव कर्मत्वमित्येवमादि । कस्मात् अन्वयव्यतिरेकदर्शनात् । इहेति समवायनिमित्तस्य ज्ञानस्यान्वयदर्शनात्सर्वत्रैकः समवाय इति गम्यते । द्रव्यत्वादिनिमित्तानां प्रत्ययानां व्यतिरेकदर्शनात्प्रतिनियमोऽपि विज्ञायते । यथा कुण्डदध्नोः संयोगैकत्वेऽपि भवत्याश्रयाश्रयिभावनियमस्तथा द्रव्यत्वादीनामपि समवायैकत्वेऽपि व्यङ्ग्यव्यञ्जकशक्तिभेदादाधाराधेयभावनियम इति । सम्बन्धनित्यत्वेऽपि न संयोगवदनित्यत्वं भाववदकारणत्वात् । यथा प्रमाणतः कारणानुपलब्धेर्नित्यो भाव इत्युक्तं तथा समवायोऽपि । न ह्यस्य कारणं किञ्चित्प्रमाणत उपलभ्यत इति । कया पुनर्वृत्त्या द्रव्यादिषु समवायो वर्तते, न संयोगः सम्भवति तस्य

१ भावद्रव्यत्वादीनां. २ पु.

२ भाव. सामान्यम्.

३ प्रतिनियमो गम्यते. पा. २ पु.

गुणत्वेन द्रव्याश्रितत्वात् । नापि समवायस्तस्यैकत्वात् । न चान्यवृत्तिरस्तीति । न । तादात्म्यात् । यथा द्रव्यगुणकर्मणां सदात्मकस्य भावस्य नान्यः सत्तायोगोऽस्ति एवमविभागिनो वृत्त्यात्मकस्य समवायस्य नान्या वृत्तिः तस्मात्स्वात्मवृत्तिः । अत एवातीन्द्रियः सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात्स्वात्मगतसंवेदनाभावाच्च तस्मादिह बुद्ध्यनुमेयः समवायः ॥

इति प्रशस्तपादाचार्यविरचिते वैशेषिकभाष्ये पदार्थोद्देशे

समवायपदार्थः समाप्तः ।[3]

---

१ तादात्म्यात् भाववत् २ पु.

२ इति सिद्धमित्यधिकः पाठ. २ पु.

३ इति समवायपदार्थः.

इति श्रीमत्प्रशस्तपादाचार्यविरचितं पदार्थधर्मसंग्रहरूपं भाष्यं समाप्तम् । पाठः २ पु ॥ इति श्रीजालन्धरवैदिकपाठशालामुख्याध्यापकश्रीहरिशास्त्रिनिर्मिता श्रीमत्प्रशस्तपादाचार्यविरचितवैशेषिकभाष्यस्य संक्षिप्तटिप्पणी समाप्ता. शकाब्दाः १८१२ सं १९४६ वैशाखस्यैकादश्याम्